संस्कृतभारती
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९९४ - ५,०००
द्वितीयमुद्रणम् - १९९७ - ५,०००
तृतीयमुद्रणम् - १९९९ - ५,०००

मूल्यं - रू. ३०.००

मुद्रणम् -
स्प्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

**SAMBHASANA SOPANAM** - A work book for Samskrita conversation practitioners, compiled by Janardana Hegde.
Publisher - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085. Ph : 6721052 / 6722576 Fax : 6722576
E-mail : samskrit.sscentre.@gems.vsnl.net.in

Pages - iv + 107 - Price - Rs. 30-00 Third Print -September - 1999
Printed at - **Span Print,** Basavanagudi, Bangalore - 560 004

# प्रस्तावना

## (प्रथममुद्रणस्य)

भाषाभ्यासिनां सम्भाषणाभ्यासे सोपानायते एतत् 'सम्भाषणसोपान'नामकं पुस्तकम् । केचन व्याकरणनियमाः, केचन वाक्यरचनाविशेषाः च एतस्मिन् निरूपिताः । आरम्भे आकर्षकं पाठ्यबिन्दुसम्बद्धं सम्भाषणम्, ततः 'विशेष' - शीर्षके विभागे सरलं निरूपणं, ततः प्रतिबिन्दु अभ्यासः - इत्येषः क्रमः आश्रितः एतस्मिन् पुस्तके ।

भाषाभ्यासिनः एतेन एव क्रमेण रचिताम् 'अभ्यासदर्शिनीं' परिशील्य तत्रत्यान् विषयान् आत्मसात् कृत्वा यदि एतत् 'सम्भाषणसोपानं' पठेयुः तर्हि विशेषलाभः । अभ्यासदर्शिन्यां निरूपितान् विषयान् ज्ञातवन्तः तु साक्षात् एतत् पुस्तकम् उपयोक्तुम् अर्हन्ति ।

पुस्तकस्य अन्ते 'उत्तरदीपिका' अस्ति, यस्याः च साहाय्येन भाषाभ्यासिनः अभ्यासभागे आत्मना लिखितम् उत्तरं समीचीनं वा न वा इति ज्ञातुं शक्नुवन्ति ।

भाषाभ्यासिनः अन्यावलम्बनं विना एतस्य पुस्तकस्य उपयोगं कर्तुं यथा शक्नुयुः तथा कर्तुम् अत्र कश्चन प्रयासः कृतः । न जानीमो वयम् - अत्र साफल्यं कियत् इति । अत्र भवन्तः एव प्रमाणम् ।

अत्रत्याः सर्वे अभ्यासाः अनुभवबलात् एव रचिताः । अनुभवाः १. स्वीयाः २. अन्येषां बोधनात्, प्रयोगदर्शनात्, अनुभवश्रवणात् च प्राप्ताः च इति द्विविधाः । एवम् अनुभवालम्बनभूतेभ्यः सर्वेभ्यः सहकारिभ्यः, कलाकाराय श्रीमते विनायकाय च वयं कृतज्ञतां समर्पयामः ।

श्रीमुख सं।। पुष्यकृष्णषष्ठी - प्रकाशकः
३.१.१९९४

## (तृतीयमुद्रणस्य)

महतः सन्तोषस्य विषयः अस्ति एषः यत् सम्भाषणसोपानम् इदं अल्पेनैव कालेन जनप्रियम् अभवत् । अनेकेषु विद्यालयेषु अभ्यासपुस्तकरूपेण अपि एतस्य उपयोगः क्रियमाणः अस्ति इत्येतदेव अस्य जनप्रियतां द्योतयति । तृतीयमुद्रणावसरे सहकृतवद्भ्यः सर्वेभ्यः कृतज्ञताः समर्प्यन्ते अस्माभिः ।

प्रमाथि सं।। अनन्तचतुर्दशी - प्रकाशकः
२४.९.१९९९

# विषयानुक्रमणिका

# १. सप्तककाराः (प्रश्नवाचकाः)




**अभ्यासः - १**

विमानापघातात् रक्षितं कश्चित् कश्चन पत्रकारः विविधान् प्रश्नान् पृच्छन् अस्ति। उत्तरस्य अनुगुणं पत्रकारस्य प्रश्नान् लिखन्तु।

उदा - <u>भवान् कथं रक्षितः ?</u>
अदृष्टबलात् अहं कथमपि रक्षितः।

१. ---------------------------------------------------------------- ?

विमाने वयं त्रयः आस्म।

२. ---------------------------------------------------------------- ?

इतः सुदूरे अरण्ये पतितम्।

३. ---------------------------------------------------------------- ?

अहं तस्य विमानस्य चालकेषु अन्यतमः।

४. ---------------------------------------------------------------- ?

प्रायः ते सर्वे मृताः स्युः। अहं सम्यक् न जानामि।

५. ---------------------------------------------------------------- ?

एतत् विमानं हिमालयपर्वतात् प्रत्यागच्छत् आसीत्।

६. ---------------------------------------------------------------- ?

परह्यः-तन्नाम २१ तमे दिनाङ्के-अपघातः जातः।

७. ---------------------------------------------------------------- ?

यन्त्रदोषस्य कारणतः प्रायः अपघातः जातः।

८. ---------------------------------------------------------------- ?

कष्टेन चलन् अरण्यम् अतिक्रम्य अत्र आगतः।

**अभ्यासः - २**

मध्यरात्रे मार्गेण आगच्छन्तं कञ्चित् आरक्षकः पृच्छन् अस्ति। भीतस्य तस्य सज्जनस्य उत्तराणि अधः सन्ति। आरक्षकस्य प्रश्नान् भवन्तः लिखन्तु।



उत्तराणि - १. शङ्करपुरात् आगच्छन् अस्मि।

२. अहं चलनचित्रं द्रष्टुं गतवान् आसम्।

३. उमाचित्रमन्दिरम्।

४. इदानीम् एकवादनम्।

५. मित्रं गृहं प्रापय्य गृहं गच्छन् अस्मि। अतः एतावान् विलम्बः।

६. मित्रगृहं रामकृष्णाश्रमसमीपे अस्ति।

७. चित्रप्रदर्शनं १२.३० वादने समाप्तम्।

८. मित्रगृहम् अपि पादाभ्याम् एव गतम्।

९. कोषे एकं रूप्यकम् अस्ति, तावदेव।

प्रश्नाः - १. ---------------------------------------------------- ?

२. ---------------------------------------------------- ?

३. ---------------------------------------------------- ?

४. ---------------------------------------------------- ?

५. ---------------------------------------------------- ?

६. ---------------------------------------------------- ?

७. ---------------------------------------------------- ?

८. ---------------------------------------------------- ?

९. ---------------------------------------------------- ?

## २. सम्भावना

पत्नी - अद्य सायं के के आगच्छेयुः ?

पतिः - रविः आगच्छेत्, सन्दीपः आगच्छेत्। मम कार्यालयतः मम त्रयः सहोद्योगिनः आगच्छेयुः।

पत्नी - भवान् सार्धपञ्चवादनतः पूर्वं गृहं प्राप्नुयात् खलु ?

पतिः - कदाचित् प्राप्नुयाम्। अथवा अहं सहोद्योगिनश्च मिलित्वा आगच्छेम।

पत्नी - अत्र साहाय्यम् आवश्यकं भवेत्। कार्याणि भवेयुः। एकाकिनी अहं सर्वं कथं वा कुर्याम् ?

पतिः - प्रभाकरः पञ्चवादने एव आगच्छेत् खलु ? सः साहाय्यं कुर्यात्।

पत्नी - सः ... ! अद्य क्रीडास्पर्धा। सः रात्रौ नववादनतः पूर्वं यदि आगच्छेत् तर्हि ...

पतिः - अस्तु, तर्हि शीघ्रम् आगमिष्यामि।

### विशेषः

* **सम्भावना** -

सम्भावना नाम ऊहा। अधस्तनं वाक्यद्वयं पश्यन्तु।

- सः गच्छति। - निश्चयः
  सः गच्छेत्। - सन्देहः
- अहं पश्यामि। - निश्चयः
  अहं पश्येयम्। - सन्देहः

एषः सन्देहः = ऊहा एव सम्भावना इति उच्यते। एतस्मिन् अर्थे गच्छेत्, पठेत्, लिखेत्, शृणुयात् इत्यादीनि रूपाणि प्रयुज्यन्ते।

## सम्भावनारूपाणि

| वर्तमाने | प्रथमपुरुषे | | उत्तमपुरुषे | |
|---|---|---|---|---|
| | ए.व. | ब.व. | ए.व. | ब.व. |
| पठति | पठेत् | पठेयुः | पठेयम् | पठेम |
| लिखति | लिखेत् | लिखेयुः | लिखेयम् | लिखेम |
| पिबति | पिबेत् | पिबेयुः | पिबेयम् | पिबेम |
| ददाति | दद्यात् | दद्युः | दद्याम् | दद्याम |
| करोति | कुर्यात् | कुर्युः | कुर्याम् | कुर्याम |
| शृणोति | शृणुयात् | शृणुयुः | शृणुयाम् | शृणुयाम |
| जानाति | जानीयात् | जानीयुः | जानीयाम् | जानीयाम |
| शक्नोति | शक्नुयात् | शक्नुयुः | शक्नुयाम् | शक्नुयाम |

**अभ्यासः - ३**

आर्याम्बा काचित् वृद्धा। तस्याः पौत्रः गणेशः – 'अहं मित्रगृहं गत्वा आगच्छामि' इति उक्त्वा निर्गतवान्। तत्समये आकाशे मेघाः आसन्। तत् दृष्ट्वा सा वृद्धा कानिचन वाक्यानि चिन्तितवती। तानि अधः सन्ति। तेषु स्थितानि रिक्तस्थानानि सम्भावनारूपैः पूरयन्तु।

उदा – अल्पे एव काले वृष्टिः (आगच्छति)।
अल्पे एव काले वृष्टिः आगच्छेत्।

१. गणेशः 'लघुवृष्टिः' इति उपेक्षां (करोति) ----------------------------।

२. वृक्षस्य अधः न (तिष्ठति) -------------------। आपणस्य पुरतः अपि न (तिष्ठति) -------------------।

३. अतः सः वृष्ट्या आर्द्रः (भवति) ------------------------------------।

४. कार्यं समाप्य सः (प्रत्यागच्छति) ----------------------------------।

५. श्वः पीनसः ज्वरः च एतं (पीडयति) --------------------------------।

६. तदा मम पुत्रः एतं वैद्यसमीपं (नयति) ------------------------------- ।

७. वैद्यः सर्वं परीक्ष्य गुलिकां सूच्यौषधं च (ददाति) ---------------------- ।

८. ज्वरकारणतः गणेशः सप्ताहाभ्यन्तरे कृशतां (प्राप्नोति) ---------------- ।

९. ज्वरसमये सः शालां गन्तु न (शक्नोति) ------------------------------ ।

१०. ज्वरसमये एषः पाठान् न (पठति) ---------------------- । अभ्यासं न (करोति) ---------------------- ।

११. प्रतिदिनं जामितानिवारणार्थं गीतानि (शृणोति) --------------------- ।

१२. दूरदर्शने सदा चित्राणि (पश्यति) ------------------------------------- ।

१३. यदा एषः शालां गच्छति तदा अध्यापकः (तर्जयति) ------------------ ।

१४. तदानीं वा एषः विवेकं (प्राप्नोति) -------------------------------- ।

१५. स्वेन कृतं दोषं (जानाति) ------------------------------------------ ।

**अभ्यासः - ४**

नगरे राजकीयपुरुषस्य भाषणकार्यक्रमः निश्चितः अस्ति । गौतमः शान्तिप्रियः । कार्यक्रमे कोलाहलः भवेत् इति गौतमस्य निरीक्षा । अग्रिमघटनाः सः सम्भावयति । तेन ऊहितानि वाक्यानि अधः सन्ति । तेषु स्थितानि रिक्तस्थानानि सम्भावना-बहुवचनरूपैः पूरयन्तु ।

१. अद्य कार्यक्रमे बहवः जनाः (सम्मिलन्ति) ----------------------------- ।

२. केचन दुष्टाः अपि कार्यक्रमम् (आगच्छन्ति) --------------------------- ।

३. भाषणसमये विरोधिनः कृष्णपताकां (प्रदर्शयन्ति) -------------------- ।

४. ते धिक्कारवचनानि (वदन्ति) ------------------------------------------ ।

५. व्यवस्थापकाः 'सर्वे कृपया तूष्णीं तिष्ठन्तु' इति (प्रार्थयन्ति) ----------- ।

६. तथापि विरोधिनः कोलाहलं (कुर्वन्ति) -------------------------------- ।

७. एतन्मध्ये दुष्टजनाः भाषणकारम् उद्दिश्य पाषाणान् (क्षिपन्ति) --------- ।

८. सामान्यान् जनान् ते (ताडयन्ति) ----------------------------- अपि ।

९. एतेन जनाः भीतिं (प्राप्नुवन्ति) ------------------------------------------।

१०. भीत्या ते इतस्ततः (धावन्ति) ---------------------------------------------।

११. तदा कोलाहलस्य निग्रहणार्थम् आरक्षकाः प्रयत्नं (कुर्वन्ति) -------------।

१२. दुष्टाः सर्वे उन्मत्ताः इव (व्यवहरन्ति) ---------------------------------।

१३. मन्त्रिणः अनुचरान् कांश्चन ते (मारयन्ति) ------------------------------।

१४. अन्ते आरक्षकाः दुष्टान् गृहीत्वा कारागारे (स्थापयन्ति) -----------------।

१५. योग्येन दण्डेन तान् (दण्डयन्ति) ---------------------------------- अपि।

**अभ्यासः - ५**

विमला महाविद्यालयस्य विद्यार्थिनी। प्रातः सा शय्यायां शयाना एव अद्य किं किं कुर्याम् इति चिन्तयति। तस्याः चिन्तनवाक्यानि अधः निर्दिष्टानि। सम्भावना - उत्तमपुरुषरूपैः वाक्यस्थानि रिक्तस्थानानि पूरयन्तु।

१. इतोऽपि अर्धघण्टां यावत् अहम् एवम् एव शयनं (करोमि) -------------।

२. अनन्तरं सख्यै पत्रं (लिखामि) ---------------------------------------------।

३. ततः विज्ञानस्य पाठान् (पठामि) -----------------------------------------।

४. मध्ये अम्बा मां साहाय्यार्थम् आह्वयति चेत् 'न' इति (वदामि) ---------।

५. अथवा तस्याः आह्वानं न (शृणोति) ---------------------------------------।

६. दशवादने एकचषकमितं काफी (पिबामि) ---------------------------।

७. दूरदर्शनस्य धारावाहिभागः सम्यक् अस्ति चेत्
किञ्चित् (पश्यामि) --------------------।

८. अनन्तरं किञ्चित्कालं सुभाषितानि (स्मरामि) -------------------------।

९. हाँ, ततः पूर्वं वस्त्राणि (प्रक्षालयामि) ---------------------------------।

१०. समयः अस्ति चेत् वीणां (वादयामि) ---------------------------------।

११. तावता मम सख्यः आगच्छेयुः। वयं मिलित्वा सङ्गीताभ्यासं (कुर्मः) --------------------।

१२. सार्धद्वादशवादने सुरेखायाः गृहं (गच्छामः) ----------------------------।

१३. सायङ्कालपर्यन्तं तत्रैव (तिष्ठामः) -------------------------------------।

१४. षड्वादनानन्तरं सर्वाः चलनचित्रं (पश्यामः) --------------------------।

१५. एवम् एकं दिनं सन्तोषेण (यापयामः) ---------------------------------।

## ३. कर्तरिप्रयोगः

अम्बरः - विनोद ! भवतः गणितपुस्तकं मह्यं ददाति वा ?

विनोदः - नीतं चेत् कदा भवान् तत् प्रत्यर्पयति ?

अम्बरः - श्वः तत् प्रत्यर्पयिष्यामि ।

विनोदः - अस्तु तर्हि । भवान् तत् नयतु ।

अम्बरः - इतिहासस्य टिप्पणीम् अपि ददातु कृपया ।

विनोदः - भवतु । श्वः उभयम् अपि प्रत्यर्पयतु । भवान् संस्कृतपाठानां प्रश्नानाम् उत्तराणि लिखितवान् वा ?

अम्बरः - चतुर्थपाठस्य उत्तराणि अहं लिखितवान् । अवशिष्टानि रात्रौ लेखिष्यामि ।

विनोदः - ह्यः भवान् किमर्थं विद्यालयं न आगतवान् ?

अम्बरः - गृहसदस्याः वयं बण्डीपुरं गतवन्तः आस्म । श्वः अपि अहं विद्यालयं न आगमिष्यामि ।

विनोदः - तर्हि पुस्तकानि प्रत्यर्पयिष्यति वा न वा ?

अम्बरः - सायं भवतः गृहम् तु आगमिष्यामि । तदा तानि आनीय दास्यामि ।

## विशेषः

* **कर्तृपदम्-कर्मपदम्-क्रियापदम् ।**

| बालकः | ग्रन्थं | पठति |
|---|---|---|
| \| | \| | \| |
| कर्तृपदम्, | कर्मपदम्, | क्रियापदम् |

i. क्रियासूचकं पदं क्रियापदम् । उदा - पठति, लिखति इत्यादयः ।

ii. क्रियां यः करोति सः कर्ता । कर्तृसूचकं पदं कर्तृपदम् ।

iii. क्रियापदम् उद्दिश्य कं/कां/किं (द्वि) इति यदा प्रश्नः क्रियते तदा उत्तररूपेण यत् प्राप्यते तत् कर्मपदम् ।

## * सकर्मकम्- अकर्मकम्

i. सकर्मकम् - क्रियापदम् उद्दिश्य कं/कां/किं (द्वि) इति प्रश्नः यदा क्रियते तदा उत्तरं प्राप्तं चेत् तत् सकर्मक-क्रियापदम्।

उदा - पठति
कं/कां/किं (द्वि) पठति ?
पाठं/ग्रन्थं/गीतां/पुस्तकं पठति।

ii. अकर्मकम् - पूर्वोक्तक्रमेण प्रश्न : यदा क्रियते तदा उत्तरं न प्राप्तं चेत् तत् क्रियापदम् अकर्मकम्।

उदा - कम्पते
कं/कां/किं (द्वि) कम्पते ?
उत्तरं नास्ति।

अ) 'बालकः पठति' इत्यस्मिन् वाक्ये कर्मपदं न निर्दिष्टम्। तथापि कं/कां/किं (द्वि) पठति इत्यस्य उत्तरं तु प्राप्तुं शक्यते एव। अतः 'पठति' इति क्रियापदं सकर्मकम् एव। (वाक्ये कर्मपदं न निर्दिष्टम् इत्यतः अकर्मकं न।)

आ) वर्धते
किं वर्धते ? - सस्यं वर्धते।

अत्र 'किम् इत्यस्य उत्तरं प्राप्तम् इत्यतः वर्धते इत्येतत् सकर्मकम्' इति न निर्णेतव्यम्। यतः अत्र प्रथमाविभक्तिसम्बन्धिनः किम् इत्यस्य उत्तरं प्राप्तं, न तु द्वितीयाविभक्तिसम्बन्धिनः किंशब्दरूपस्य। द्वितीयाविभक्तिसम्बन्धिनः किंशब्दरूपस्य उत्तरं प्राप्तं चेदेव सकर्मकत्वम्।

इ) आत्मनेपदिषु परस्मैपदिषु चापि सकर्मकाकर्मकधातवः भवन्ति एव। सकर्मकाकर्मकव्यवस्थायाः आत्मनेपद-परस्मैपदव्यवस्थायाः च न कोऽपि सम्बन्धः।

## * कर्तरिप्रयोगः

संस्कृते त्रिविधाः प्रयोगाः सन्ति - १) कर्तरिप्रयोगः २) कर्मणिप्रयोगः ३) भावेप्रयोगः चेति। कर्तृपदस्य अनुगुणं यत्र क्रियापदस्य वचनं, पुरुषः च परिवर्तते सः कर्तरिप्रयोगः।

उदा - i. बालकः ग्रन्थं पठति । - एकवचनम्
बालकाः ग्रन्थं पठन्ति । - बहुवचनम्

ii. सः ग्रन्थं पठति । - प्रथमपुरुषः
अहं ग्रन्थं पठामि । - उत्तमपुरुषः

अ) प्रथमे उदाहरणे कर्तृपदं यदा एकवचने आसीत् तदा क्रियापदम् अपि एकवचने आसीत् । किन्तु यदा कर्तृपदं बहुवचनं प्राप्नोत् तदा क्रियापदस्य अपि बहुवचनं जातम् । अतः एतस्मात् ज्ञायते यत् कर्तृपदस्य क्रियापदस्य च **वचनसम्बन्धः** अस्ति इति ।

द्वितीये उदाहरणे 'सः' इत्यस्य कर्तृपदस्य अनुगुणं क्रियापदं प्रथमपुरुषे, 'अहम्' इत्यस्य कर्तृपदस्य अनुगुणं क्रियापदम् उत्तमपुरुषे च अस्ति । एतस्मात् सिद्धं यत् कर्तृपदस्य क्रियापदस्य च **पुरुषसम्बन्धः** अस्ति इति ।

अयं च सारः -




आ) कर्मपदस्य क्रियापदस्य च तादृशः सम्बन्धः (वचनसम्बन्धः पुरुषसम्बन्धः च) न भवति ।

उदा - i. बालकः ग्रन्थं पठति । - (कर्मपदम् एकवचने)
बालकः ग्रन्थान् पठति । - (कर्मपदं बहुवचने)

ii. बालकः तं पश्यति । - (कर्मपदं प्रथमपुरुषसम्बन्धि)
बालकः मां पश्यति । - (कर्मपदम् उत्तमपुरुषसम्बन्धि)

प्रथमे उदाहरणे कर्मपदम् एकत्र एकवचने अपरत्र बहुवचने च स्थापितम् । तथापि क्रियापदे परिवर्तनं न जातम् । अतः कर्मपदस्य क्रियापदस्य च **वचनसम्बन्धः नास्ति** इति ज्ञातम् । एवम् एव द्वितीये उदाहरणे कर्मपदम् एकत्र 'सः' इति, अपरत्र 'अहम्' इति च अस्ति चेदपि क्रियापदे

पुरुषपरिवर्तनं किमपि न जातम्। अतः निर्णीतं यत् कर्मपदस्य क्रियापदस्य च **पुरुषसम्बन्धः नास्ति** इति।

इ) कर्तरिप्रयोगे क्रियापदानि परस्मैपदीनि आत्मनेपदीनि वा भवितुम् अर्हन्ति।

उदा - बालकः ग्रन्थं पठति/पश्यति/ईक्षते/वन्दते/लभते ...

ई) कर्तरिप्रयोगे कर्तृपदं प्रथमाविभक्तौ, कर्मपदं द्वितीयाविभक्तौ च भवति।

**अभ्यासः - ६**

अधोनिर्दिष्टेषु क्रियापदेषु कानि सकर्मकाणि कानि अकर्मकाणि इति आवरणे निर्दिशन्तु।

उदा - पठति - (----------) पठति (सकर्मकः)

१. लिखति - (--------------------) २. भवति - (--------------------)

३. शृणोति - (-------------------) ४. पश्यति - (-------------------)

५. उपविशति - (-----------------) ६. उत्तिष्ठति - (------------------)

७. आह्वयति - (------------------) ८. जानाति - (------------------)

९. क्रीणाति - (-------------------) १०. विकसति - (-----------------)

११. कम्पते - (------------------) १२. श्लाघते - (-------------------)

१३. निरीक्षते - (----------------) १४. पलायते - (-----------------)

१५. सहते - (-------------------) १६. खिद्यते - (------------------)

**अभ्यासः - ७**

अधस्तनवाक्येषु सकर्मकवाक्यं किम्, अकर्मकवाक्यं च किम् इति आवरणे लिखन्तु।

उदा - सः खादति। (--------------)
सः खादति। (सकर्मकवाक्यम्)

१. बालकः पतति। (-------------------------------)

२. गीता शृणोति। (-------------------------------)

३. छात्राः पृच्छन्ति। (-------------------------------)

४. लेखनी अस्ति। (-------------------------------)

५. सा जानाति। (-------------------------------)

६. शुनकः दशति। (-------------------------------)

७. यानानि तिष्ठन्ति। (-------------------------------)

८. अहम् इच्छामि। (-------------------------------)

९. नदी प्रवहति। (-------------------------------)

१०. चोरः पलायते। (-------------------------------)

११. देवः रक्षति। (-------------------------------)

१२. विद्यार्थी प्रयतते। (-------------------------------)

१३. छात्राः स्पर्धन्ते। (-------------------------------)

१४. पक्षी उड्डयते। (-------------------------------)

१५. अहं मन्ये। (-------------------------------)

**अभ्यासः - ८**

उदाहरणानुगुणम् अधस्तनवाक्यानां विश्लेषणं कुर्वन्तु।

| वाक्यानि | कर्तुः वचनम् | कर्मणः वचनम् | क्रियापदस्य वचनं पुरुषः च |
|---|---|---|---|
| उदा - बालिका गीतानि शृणोति। | ए.व. | ब.व. | ए.व./प्र.पु |
| १. सः फलानि आनयति। | ---------- | ---------- | --------/-------- |
| २. एताः लेखनीः क्रीणन्ति। | ---------- | ---------- | --------/-------- |
| ३. माता अन्नं परिवेषयति। | ---------- | ---------- | --------/-------- |
| ४. सेवकः कार्याणि करोति। | ---------- | ---------- | ---------------- |
| ५. अहम् अभ्यासान् लिखामि। | ---------- | ---------- | --------/-------- |
| ६. वृद्धः कथाः वदति। | ---------- | ---------- | --------/-------- |
| ७. गायकाः गीतानि गायन्ति। | ---------- | ---------- | --------/-------- |
| ८. निर्वाहकः चिटिकाः ददाति। | ---------- | ---------- | --------/-------- |
| ९. कृपणः नाणकानि गणयति। | ---------- | ---------- | --------/-------- |
| १०. धनिकः कर्मकरान् आज्ञापयति। | ---------- | ---------- | --------/-------- |

# ४. आत्मनेपदी

पुत्रः - कोऽपि भिक्षुकः याचते । किं ददामि ?

माता - किञ्चित् तण्डुलं दत्त्वा तं प्रेषयतु ।

पुत्रः - अम्ब ! सः अन्नम् अपेक्षते । 'अन्नं ददातु श्रीमन्' इति वदन् मां वन्दते ।

माता - अन्नं दत्तं चेत् श्लाघते अपि सः । किन्तु इदानीम् अन्नं न वर्तते वत्स !

पुत्रः - बुभुक्षिताय तस्मै यत् रोचते तत् ...

माता - भवान् दानशूरकर्णस्य बन्धुः । सः अन्नम् अपेक्षते । धनं प्रार्थयते । वस्त्रदानं निरीक्षते ... ।

पुत्रः - अम्ब ! किमर्थं भर्त्सयते भवती ? एषः तादृशः न ।

माता - दर्शनेन किं ज्ञायते ? केचन भिक्षायाचनव्याजेन वञ्चयन्ते अपि ।

पुत्रः - वृथा सर्वस्मिन् शङ्कते भवती ।

माता - अहं शङ्के । भवान् सर्वस्मिन् अनुकम्पते । आस्तां तावत् । इदानीं गृहे अन्नं न वर्तते । एकं रूप्यकं ददातु । अन्नं सः अन्यगृहतः लभते एव ।

## विशेषः

* **परस्मैपदी - आत्मनेपदी - उभयपदी**

  - गच्छति, पठति, लिखति, क्रीडति ... इत्यादिषु अन्ते 'ति' दृश्यते । अतः एतादृशाः धातवः (गम्, पठ्, लिख्, क्रीड् इत्यादयः) 'परस्मैपदिनः' इति उच्यन्ते ।

  - वन्दते, रोचते, शङ्कते, ईक्षते ... इत्यादिषु अन्ते 'ते' दृश्यते । अतः एतादृशाः धातवः (वन्द्, रुच्, शङ्क्, ईक्ष् इत्यादयः) 'आत्मनेपदिनः' इति उच्यन्ते ।

  - पचति/पचते, याचति/याचते, करोति/कुरुते ... इत्यादिषु ति/ते इति उभयम् अपि दृश्यते । अतः एते उभयपदिनः धातवः ।

● कः धातुः परस्मैपदी, कः धातुः आत्मनेपदी, कः धातुः उभयपदी इति तु व्यवहारबलात् पुस्तकबलात् वा ज्ञातव्यम् । एतां व्यवस्थां ज्ञातुं सामान्यव्यवस्था काऽपि नास्ति ।

● आत्मनेपदिधातवः परस्मैपदित्वेन, परस्मैपदिधातवः आत्मनेपदित्वेन वा न प्रयोक्तव्याः।

उदा - i. पठते, लिखते, क्रीडते, गच्छते ... इत्यादिरूपेण प्रयोगः न करणीयः।

ii. रोचति, कम्पति, वन्दति, डयति ... इत्यादिरूपेण प्रयोगः न करणीयः।

## * आत्मनेपदिधातूनां रूपाणि -

### i. वर्तमानकाले

| | प्र.पु. | | उ.पु. | |
|---|---|---|---|---|
| | ए.व. | ब.व. | ए.व. | ब.व. |
| वन्द् | वन्दते | वन्दन्ते | वन्दे | वन्दामहे |
| ईक्ष् | ईक्षते | ईक्षन्ते | ईक्षे | ईक्षामहे |
| कम्प् | कम्पते | कम्पन्ते | कम्पे | कम्पामहे |

### ii. भूतकाले

परस्मैपदिनां रूपाणि यथा तथैव।

उदा - i. पठितवान्/वती, लिखितवान्/वती - परस्मैपदिनः
ii. * वन्दितवान्/वती, ईक्षितवान्/वती - आत्मनेपदिनः

* भूतकाले अवन्दत, ऐक्षत ... इत्यादीनि क्रियापदरूपाणि यद्यपि सन्ति, किन्तु तेषां रूपाणि क्लिष्टानि। अतः भूतकाले 'क्तवतु' प्रत्ययान्तानि एव अत्र निर्दिष्टानि। सरलतादृष्ट्या एवं कृतम्।

### iii. भविष्यत्काले

| प्र.पु. ए.व. | प्र.पु. ब.व. | उ.पु. ए.व. | उ.पु. ब.व. |
|---|---|---|---|
| वन्दिष्यते | वन्दिष्यन्ते | वन्दिष्ये | वन्दिष्यामहे |
| कम्पिष्यते | कम्पिष्यन्ते | कम्पिष्ये | कम्पिष्यामहे |
| शङ्किष्यते | शङ्किष्यन्ते | शङ्किष्ये | शङ्किष्यमाहे |

### iv. आज्ञादिषु

| प्र.पु. ए.व. | प्र.पु. ब.व. | उ.पु. ए.व. | उ.पु. ब.व. |
|---|---|---|---|
| वन्दताम् | वन्दन्ताम् | वन्दै | वन्दामहै |
| कम्पताम् | कम्पन्ताम् | कम्पै | कम्पामहै |
| शङ्कताम् | शङ्कन्ताम् | शङ्कै | शङ्कामहै |

(सूचना - i. यद्यपि अत्र विभिन्नकालेषु उत्तमपुरुषरूपाणि अपि दत्तानि तथापि अभ्यासस्तु वर्तमानकाले प्रथमपुरुषे (एकवचने बहुवचने च) च केवलं दत्तः। व्यवहारार्थं तावान् अभ्यासः पर्याप्तः भवति।
ii. परस्मैपदिनां विभिन्नकालादिषु रूपाणि अभ्यासदर्शिन्याम् एव विस्तरेण दत्तानि। अतः तानि पुनः अत्र न दत्तानि।)

### 'करोति' इत्यस्य प्रयोगः

आत्मनेपदिक्रियापदानि - 'करोति' इत्यस्य प्रयोगेण परस्मैपदिरूपेण परिवर्तयितुं शक्यानि*। तेन प्रयोगसौलभ्यं सिध्द्यति।

उदा - वन्दते - वन्दनं करोति।
वञ्चयते - वञ्चनां करोति।
परीक्षते - परीक्षां करोति।

---

* किन्तु धातुः अकर्मकः चेत् 'भवति' इत्यस्य प्रयोगः करणीयः।
उदा - कम्पते - कम्पितः भवति।
निलीयते - निलीनः भवति।
उद्विजते - उद्विग्नः भवति।

**अभ्यासः - ९**

अरविन्दः कश्चन बालकः। सः अनुचितैः क्रियापदरूपैः अधस्तनवाक्येषु स्थितानि रिक्तस्थानानि पूरितवान् अस्ति। भवन्तः उचितानि क्रियापदानि लिखन्तु। (क्रियापदानि नूतनानि न स्वीकरणीयानि। अधस्तनवाक्येषु स्थितानि एव स्वीकरणीयानि।)

| | |
|---|---|
| उदा - | भक्तः देवं कम्पते। ---------- |
| | भक्तः देवं वन्दते। |

१. छात्रः नियमम् पालयते। -------------------------------------।

२. वञ्चकः जनान् प्रतिष्ठते। -------------------------------------।

३. बुद्धिमान् भाविघटनाम् उत्प्लवन्ते। ----------------------------।

४. आरक्षकं दृष्ट्वा चोरः प्रतीक्षते। ---------------------------------।

५. वायुकारणतः वृक्षाः शङ्कते। ---------------------------------।

६. पक्षिणः आकाशे विस्मयन्ते। ---------------------------------।

७. कपयः वृक्षात् वृक्षम् कम्पन्ते। -------------------------------।

८. बालकाः गजं दृष्ट्वा प्रकाशन्ते। ---------------------------------।

९. आकाशे नक्षत्राणि उल्लङ्घते। ---------------------------------।

१०. गृहिणी सायङ्काले पतिं ऊहते। ------------------------------।

११. कार्यक्रमः न समाप्तः। इतोऽपि वञ्चयते। ---------------------।

१२. सन्देहशीलः सर्वेषु अनुवर्तते। ------------------------------।

१३. यानं दशवादने इतः डयन्ते। ---------------------------------।

१४. बालकः उपरि स्थितं फलं न रोचते। -----------------------।

१५. मह्यं मधुरखाद्यं विशेषतः लभते। ---------------------------।

**अभ्यासः - १०**

बालकः अरविन्दः अज्ञानवशात् अधोनिर्दिष्टेषु वाक्येषु परस्मैपदिधातून् आत्मनेपदित्वेन, आत्मनेपदिधातून् परस्मैपदित्वेन च प्रयुक्तवान् अस्ति। अतः तेन प्रयुक्तानि अशुद्धरूपाणि रेखया अपनीय पार्श्वे शुद्धानि रूपाणि लिखन्तु।

| परस्मैपदिनः | आत्मनेपदिनः |
|---|---|
| पठति, गच्छति, उत्तिष्ठति, लिखति, उपविशति, सञ्चरति, निन्दति। | वन्दते, प्रतिष्ठते, विक्रीणीते, युध्यते, शोभते, आशंसते, प्रयतते, सहते। |

१. विद्यालये सर्वे बालकाः पठन्ते। ----------------------------------।

२. उद्योगिनः प्रातः कार्यालयं गच्छन्ते। -----------------------------।

३. पुत्रः प्रातःकाले जननीं वन्दति। -----------------------------------।

४. भवान् प्रतिदिनं कार्यालयात् कदा प्रतिष्ठति ? -------------------।

५. सः प्रतिदिनं प्रातः पञ्चवादने उत्तिष्ठते। ---------------------------।

६. आपणिकः वस्तूनि विक्रीणति। ------------------------------------।

७. ते बालकाः पत्राणि लिखन्ते। ---------------------------------------।

८. राजा शत्रुभिः सह युद्धयति। ----------------------------------------।

९. पण्डितसभायां मूर्खः न शोभति। ---------------------------------।

१०. अतिथिः आसन्दे उपविशते। -------------------------------------।

११. व्याघ्रः अरण्ये सञ्चरते। ---------------------------------------------।

१२. प्रयाणसमये बान्धवाः शुभम् आशंसति। -------------------------।

१३. किमर्थं भवती तां विना कारणं निन्दते ? ----------------------।

१४. बालकः प्रथमस्थानं प्राप्तुं प्रयतति। ---------------------------।

१५. धीरः कष्टानि लीलया सहति। -----------------------------------।

## ५. कर्मणिप्रयोगः - वर्तमाने

अध्यापकः - स्वातन्त्र्यदिनोत्सवदिने मनोरञ्जनकार्यक्रमाः क्रियन्ते। कार्यक्रमं कर्तुं सर्वेभ्यः अवकाशः दीयते।

मुरलिः - श्रीमन्, मया एकपात्राभिनयः क्रियते।

शम्भुः - मया देशभक्तिगीतं गीयते।

वनिता - अस्माभिः समूहगीतं गीयते।

अच्युतः - मया वाद्यं वाद्यते श्रीमन्!

दिलीपः - श्रीमन्! तस्मिन् दिने प्रदर्शिनी अपि आयोज्यते वा ?

अध्यापकः - सर्वैः उत्साहः प्रदर्श्यते चेत् आयोज्यते।

अच्युतः - तर्हि अस्माभिः प्रदर्शिनीकार्यं क्रियते। वस्तूनि सङ्गृह्यन्ते। फलकानि लिख्यन्ते। यन्त्रादीनि सज्जीक्रियन्ते। रञ्जकसाधनानि रच्यन्ते।

अध्यापकः - साधु! सर्वैः प्रबन्धकत्वेन कार्यं क्रियते वा न वा ?

सर्वे - अस्माभिः सर्वैः प्रबन्धकैः भूयते।

अध्यापकः - कार्यक्रमानन्तरं मौनं गृहं प्रति धाव्यते चेत् ?

सर्वे - न। भवता यत् आदिश्यते तत् पाल्यते।

### विशेषः

* **कर्मणिप्रयोगः**

| | कर्तृपदम् | कर्मपदम् | क्रियापदम् |
|---|---|---|---|
| कर्तरिप्रयोगः | बालकः (प्रथमाविभक्तिः) | ग्रन्थं (द्वितीयाविभक्तिः) | पठति। |
| कर्मणिप्रयोगः | बालकेन (तृतीयाविभक्तिः) | ग्रन्थः (प्रथमाविभक्तिः) | पठ्य ते। (धातुः + य + ते) |

वचनसम्बन्धः & पुरुषसम्बन्धः

अ) कर्मणिप्रयोगे कर्मणः क्रियापदस्य च वचनसम्बन्धः पुरुषसम्बन्धः च भवति। (कर्तरिप्रयोगे तु तादृशः सम्बन्धः कर्तुः क्रियापदस्य च भवति।)

उदा - i. बालकेन ग्रन्थः पठ्यते। - एकवचनम्
बालकेन ग्रन्थाः पठ्यन्ते। - बहुवचनम्

ii. बालकेन सः ताड्यते। - प्रथमपुरुषः
बालकेन अहं ताड्ये। - उत्तमपुरुषः

प्रथमे उदाहरणे कर्मणः वचनस्य अनुगुणं क्रियापदस्य वचने परिवर्तनं दृश्यते। अतः ज्ञायते - तयोः वचनसम्बन्धः अस्ति इति।

द्वितीये उदाहरणे 'सः ताड्यते', 'अहं ताड्ये' इत्यत्र कर्मणः अनुगुणं पुरुषपरिवर्तनं जातं दृश्यते। अतः स्पष्टं यत् कर्मणः क्रियापदस्य च पुरुषसम्बन्धः अस्ति इति।

आ) कर्मणिप्रयोगे कर्तृपदस्य क्रियापदस्य च वचनसम्बन्धः पुरुषसम्बन्धः च न भवति।

उदा - i. बालकेन ग्रन्थः पठ्यते। - कर्तृपदम् एकवचने
बालकैः ग्रन्थः पठ्यते। - कर्तृपदम् बहुवचने

ii. तेन ग्रन्थः पठ्यते। - कर्तृपदं प्रथमपुरुषसम्बन्धि
मया ग्रन्थः पठ्यते। - कर्तृपदम् उत्तमपुरुषसम्बन्धि

उपरि प्रथमे द्वितीये च उदाहरणे क्रमशः कर्तृपदस्य वचनपरिवर्तनं पुरुषपरिवर्तनं च कृतम्। तथापि क्रियापदे परिवर्तनं किमपि न दृश्यते।

इ) कर्मणिप्रयोगे कर्तृपदं तृतीयाविभक्तौ, कर्मपदं च प्रथमाविभक्तौ भवति।

ई) कर्मणिप्रयोगे क्रियापदं सर्वदा आत्मनेपदि एव भवति। (सर्वत्र 'ते') वर्तमानकाले धातोः अनन्तरं 'य' श्रूयते।

उदा -

| | कर्तरिप्रयोगे | कर्मणिप्रयोगे |
|---|---|---|
| परस्मैपदिनः - | पठति<br>लिखति<br>त्यजति | पठ् + य + ते<br>लिख् + य + ते<br>त्यज् + य + ते |
| आत्मनेपदिनः - | ईक्षते<br>लभते<br>वन्दते | ईक्ष् + य + ते<br>लभ् + य + ते<br>वन्द् + य + ते |

उपरि परस्मैपदिनां 'ति' इति, आत्मनेपदिनां 'ते' इति च अस्ति। किन्तु कर्मणिप्रयोगे उभयविधानाम् अपि धातूनां 'य + ते' योगः दृश्यते।

**अभ्यासः - ११**

अधः वर्तमानकालस्य कर्तरिप्रयोगस्य क्रियापदानि निर्दिष्टानि सन्ति। तेषां पुरतः मूलधातवः अपि निर्दिष्टाः* सन्ति। रिक्तेषु स्थानेषु कर्मणिरूपाणि लिखन्तु।

उदा - लिखति (लिख्) - ----------। ईक्षते (ईक्ष्) - ----------।
लिखति (लिख्) - लिख्यते। ईक्षते (ईक्ष्) - (ईक्ष्यते)।

१. पठति (पठ्) - --------------------। २. गच्छति (गम्) - --------------।
३. खादति (खाद्) - ------------------। ४. नमति (नम्) - ---------------।
५. सहते (सह्) - --------------------। ६. लभते (लभ्) - ---------------।
७. आप्नोति (आप्) - -----------------। ८. करोति (कृ) - ----------------।
९. क्षालयति (क्षाल्)- -----------------। १०. शृणोति (श्रु) - --------------।
११. आलोचते (आ + लोच्) - --------। १२. ऊहते (ऊह्) - ---------------।
१३. आनयति (आ + नी) - -----------। १४. गायति (गै) - ---------------।
१५. ददाति (दा) - ------------------। १६. योजयति (योज्) - ----------।
१७. पश्यति (दृश्) - -----------------। १८. पिबति (पा) ----------------।
१९. जानाति (ज्ञा) - -----------------। २०. पृच्छति (पृच्छ्) - -----------।

* धातुनिर्देशसमये व्यावहारिकदृष्टिः आश्रिता अत्र।

## अभ्यासः - १२

अधोनिर्दिष्टानि कर्तरिप्रयोगवाक्यानि कर्मणिप्रयोगवाक्यत्वेन लिखन्तु ।

उदा - बालकः कथां लिखति । बालकेन कथा लिख्यते ।

१. सः पाठं पठति । ---------------------------------------------------- ।

२. एषः विषयं स्मरति । ---------------------------------------------- ।

३. अहं कथां जानामि । ----------------------------------------------- ।

४. सा बालकं पश्यति । ----------------------------------------------- ।

५. एषा स्यूतं ददाति । ----------------------------------------------- ।

६. बालकः हस्तं क्षालयति । ------------------------------------------ ।

७. गृहिणी तण्डुलम् आनयति । --------------------------------------- ।

८. काकः आहारं लभते । --------------------------------------------- ।

९. सा सन्दर्भम् ऊहते । ---------------------------------------------- ।

१०. छात्रः प्रश्नं पृच्छति । ---------------------------------------------- ।

## अभ्यासः - १३

अधोनिर्दिष्टानि वाक्यानि कर्मणि परिवर्तयन्तु । (एतेषु कर्तरिवाक्येषु कर्तृपदं बहुवचने अस्ति । बहुवचनान्तस्य कर्तृपदस्य क्रियापदस्य च सम्बन्धः न भवति इत्यंशं प्रतिवाक्यं परिशीलयन्तु ।)

उदा - भवन्तः नियमं परिशीलयन्ति । भवद्भिः नियमः परिशील्यते ।

१. ते रामशब्दं वदन्ति । --------------------------------------------- ।

२. एताः कदलीं खादन्ति । ------------------------------------------- ।

३. ताः गीतं गायन्ति। ------------------------------------------------।

४. बालिकाः प्रश्नं लिखन्ति। ------------------------------------------।

५. छात्राः कथां शृण्वन्ति। -------------------------------------------।

६. जनाः कष्टं सहन्ते। ------------------------------------------------।

७. पाचकाः पाकं कुर्वन्ति। ---------------------------------------------।

८. भक्ताः देवं नमन्ति। ------------------------------------------------।

९. बालकाः जलम् आनयन्ति। -------------------------------------------।

१०. एते दुर्गुणं त्यजन्ति। ------------------------------------------------।

**अभ्यासः - १४**

अधोनिर्दिष्टानि वाक्यानि कर्मणि परिवर्तयन्तु। (एतेषु वाक्येषु कर्मपदानि बहुवचनान्तानि इति, तदनुगुणं क्रियापदम् अपि बहुवचनान्तं भवति इति च स्मरन्तु।)

उदा - छात्रः दिवसान् गणयति। छात्रेण दिवसाः गण्यन्ते।

१. बालकः चाकलेहान् खादति। ------------------------------------------।

२. सा फलानि क्रीणाति। -----------------------------------------------।

३. यानं जनान् नयति। -------------------------------------------------।

४. कर्मकरः सस्यानि आरोपयति। ---------------------------------------।

५. बालिका लताः स्पृशति। ---------------------------------------------।

६. छात्रः प्रश्नान् शृणोति। ----------------------------------------------।

७. विद्यार्थिनी पाठान् लिखति। ------------------------------------------।

८. दुष्टः जनान् निन्दति। ------------------------------------------------।

९. बालकः पाषाणान् क्षिपति। ------------------------------------------------------।

१०. सेवकः आसन्दान् मार्जयति। ------------------------------------------------------।

११. भक्ताः घण्टाः वादयन्ति। ------------------------------------------------------।

१२. महिलाः शाटिकाः क्रीणन्ति। ------------------------------------------------------।

१३. भृत्याः गोणीः नयन्ति। ------------------------------------------------------।

१४. पण्डिताः ग्रन्थान् परिशीलयन्ति। ------------------------------------------------------।

१५. सर्वे बान्धवान् इच्छन्ति। ------------------------------------------------------।

# ६. कर्मणिप्रयोगः - भूतकाले

पुत्री - तात! मया चित्रं लिखितं, पश्यतु।
पिता - सुन्दरम् अस्ति। चित्रलेखनं केन पाठितम्?
पुत्री - मम अध्यापिकया पाठितम्।
पिता - शालातः आगत्य क्षीरं पीतं खलु?
पुत्री - आम्। खाद्यम् अपि खादितम्। अम्बया अद्य मधुरखाद्यं कृतम्।
पिता - तत् मदर्थं किञ्चित् रक्षितं वा न वा?
पुत्री - भवदर्थं अम्बया पृथक् स्थापितम्। पश्यतु। भवतः स्वरं श्रुत्वा तया खाद्यं पानीयं च आनीतम् एव।
पिता - मया इतोऽपि वस्त्रपरिवर्तनं न कृतम्। हस्तपादं न क्षालितम्। वत्से! भवत्या गृहपाठः लिखितः वा न वा?
पुत्री - सर्वं लिखितम्। पाठः अपि पठितः। किञ्चित्कालं क्रीडितम् अपि।
पिता - सङ्गीतकक्ष्या न गता वा?
पुत्री - अद्य अध्यापिकया एव अत्र आगतम् आसीत्।

**विशेषः**

*** कर्मणिप्रयोगस्य भूतकालरूपाणि ***

| वर्तमाने (कर्तरि) | भूते कर्मणि | | | | | |
|---|---|---|---|---|---|---|
| | पुंलिङ्गे | | स्त्रीलिङ्गे | | नपुंसकलिङ्गे | |
| | ए.व. | ब.व. | ए.व. | ब.व. | ए.व. | ब.व. |
| करोति | कृतः | कृताः | कृता | कृताः | कृतम् | कृतानि। |
| शृणोति | श्रुतः | श्रुताः | श्रुता | श्रुताः | श्रुतम् | श्रुतानि। |
| पश्यति | दृष्टः | दृष्टाः | दृष्टा | दृष्टाः | दृष्टम् | दृष्टानि। |
| नयति | नीतः | नीताः | नीता | नीताः | नीतम् | नीतानि। |

* भूतकाले - अपठ्यत - अपठ्यन्त, अपठ्ये - अपठ्यामहि इत्येतादृशानि रूपाणि अपि प्रयोक्तुं शक्यानि। किन्तु तानि कठिनानि। अतः सरलतां मनसि निधाय अत्र भूतकाले कृत, दृष्ट, पठित - इत्यादीनि क्तप्रत्ययान्तरूपाणि एव निर्दिष्टानि।

* **क्तप्रत्ययः**

कृतः, श्रुतः, दृष्टः इत्यादिषु 'क्त' (त)प्रत्ययः अस्ति।

धातुः + क्त (त) = क्तप्रत्ययान्तं रूपम्

कृ + त = कृतः/कृता/कृतम्

* **कर्मणिप्रयोगे भूतकाले अपि कर्म-क्रियापदयोः एव वचनसम्बन्धः।**

* **कृतः, श्रुतः इत्यादीनि यद्यपि क्रियापदस्य अर्थं बोधयन्ति, तथापि एतानि क्रियापदानि न। अतः एतेषां पुरुषरूपाणि न भवन्ति, अपि तु विभक्तिरूपाणि एव।**

**अतः - कर्मणः क्तप्रत्ययान्तस्य च पुरुषसम्बन्धः न भवति। प्रत्युत लिङ्गसम्बन्धः भवति। तन्नाम कर्मणः यत् लिङ्गं तदेव लिङ्गं भवति क्तप्रत्ययान्तस्य अपि। (वचनसम्बन्धः तु यथापूर्वम् अस्ति एव।)**

उदा - बालकेन ग्रामः दृष्टः। - पुंलिङ्गे
बालकेन लता दृष्टा। - स्त्रीलिङ्गे
बालकेन फलं दृष्टम्। - नपुंसकलिङ्गे

**अभ्यासः - १५**

चक्रपाणिः नगरे प्रवृद्धः बालकः। सः कदाचित् ग्रामस्थं पितामहगृहं गतवान्। तेन तत्र दृष्टानि -

---

१. पादमार्गः २. प्रपितामही ३. पूगवाटिका ४. अरण्यम् ५. निर्झरी ६. महानदी ७. पूगवृक्षः ८. कुटीरः ९. गृध्रः १०. केदारः ११. मयूरनृत्यम् १२. शृगालः १३. जलपातः १४. गुहा १५. गोष्ठम्

---

चक्रपाणिना ग्रामे किं किं दृष्टम् ?

उदा - १. चक्रपाणिना ग्रामे पादमार्गः दृष्टः।

२. चक्रपाणिना ग्रामे ------------------------------------------------------------ ।

३. चक्रपाणिना ग्रामे ------------------------------------------------------------ ।

४. चक्रपाणिना ग्रामे --------------------------------------------------- ।

५. चक्रपाणिना ग्रामे --------------------------------------------------- ।

६. चक्रपाणिना ग्रामे --------------------------------------------------- ।

७. चक्रपाणिना ग्रामे --------------------------------------------------- ।

८. चक्रपाणिना ग्रामे --------------------------------------------------- ।

९. चक्रपाणिना ग्रामे --------------------------------------------------- ।

१०. चक्रपाणिना ग्रामे --------------------------------------------------- ।

११. चक्रपाणिना ग्रामे --------------------------------------------------- ।

१२. चक्रपाणिना ग्रामे --------------------------------------------------- ।

१३. चक्रपाणिना ग्रामे --------------------------------------------------- ।

१४. चक्रपाणिना ग्रामे --------------------------------------------------- ।

१५. चक्रपाणिना ग्रामे --------------------------------------------------- ।

**अभ्यासः - १६**

ग्रामम् आगतेन चक्रपाणिना सह गणेशः नगरम् आगतवान् । नगरे यानि दृष्टानि तेषां कारणतः सः दिग्भ्रान्तः । गणेशेन नगरे दृष्टानि -

---

१. यानानि २. विचित्रजनाः ३. त्रिचक्रिकाः ४. चित्रमन्दिराणि ५. उन्नतभवनानि ६. कार्यालयाः ७. वित्तकोषाः ८. आपणाः ९. चलनचित्राणि १०. रम्योद्यानानि ११. उद्योगिन्यः १२. राजमार्गाः १३. उपाहारमन्दिराणि १४. मन्त्रिणः १५. प्रासादाः

---

एतेषाम् आधारेण वाक्यानि लिखन्तु -

उदा - १. गणेशेन नगरे यानानि दृष्टानि ।

२. गणेशेन नगरे --------------------------------------------------- ।

३. गणेशेन नगरे ------------------------------------------------------ ।

४. गणेशेन नगरे ------------------------------------------------------ ।

५. गणेशेन नगरे ------------------------------------------------------ ।

६. गणेशेन नगरे ------------------------------------------------------ ।

७. गणेशेन नगरे ------------------------------------------------------ ।

८. गणेशेन नगरे ------------------------------------------------------ ।

९. गणेशेन नगरे ------------------------------------------------------ ।

१०. गणेशेन नगरे ------------------------------------------------------ ।

११. गणेशेन नगरे ------------------------------------------------------ ।

१२. गणेशेन नगरे ------------------------------------------------------ ।

१३. गणेशेन नगरे ------------------------------------------------------ ।

१४. गणेशेन नगरे ------------------------------------------------------ ।

१५. गणेशेन नगरे ------------------------------------------------------ ।

**अभ्यासः - १७**

गणेशः अविभक्तकुटुम्बे जातः । तस्य गृहे सर्वे गृहकार्याणि क्षेत्रकार्याणि च स्वयं कुर्वन्ति । एकस्मिन् दिने ते किं किं कृतवन्तः इति अधः निर्दिष्टम् अस्ति । तानि वाक्यानि कर्मणिप्रयोगरूपेण लिखन्तु ।

उदा - गणेशः वृतिं समीकृतवान् । गणेशेन वृतिः समीकृता ।

१. पितामहः देवं पूजितवान् । ---------------------------------------- ।

२. पितामही वर्तिकां निर्मितवती । ---------------------------------------- ।

३. जननी पाकं कृतवती । ---------------------------------------- ।

४. अग्रजा रङ्गवल्लीं लिखितवती। ------------------------------------------------।

५. जनकः भगवद्गीतां पठितवान्। ------------------------------------------------।

६. प्रथमानुजा शाकं कर्तितवती। ------------------------------------------------।

७. द्वितीयानुजा जलम् आनीतवती। ------------------------------------------------।

८. पितृव्या पात्राणि प्रक्षालितवती। ------------------------------------------------।

९. ज्येष्ठपितृव्यः सस्यानि आरोपितवान्। ------------------------------------------------।

१०. अग्रजः धेनुभ्यः तृणानि दत्तवान्। ------------------------------------------------।

११. पितृव्यपुत्रः क्षीरं नीतवान्। ------------------------------------------------।

१२. पितृभगिनी गोष्ठं स्वच्छीकृतवती। ------------------------------------------------।

१३. तृतीयानुजा गृहं मार्जितवती। ------------------------------------------------।

१४. अनुजः अवकरान् क्षिप्तवान्। ------------------------------------------------।

१५. कनिष्ठपितृव्यः तृणानि सङ्गृहीतवान्। ------------------------------------------------।

**अभ्यासः - १८**

अधस्तनवाक्यानि कर्मणिवाक्यत्वेन लिखन्तु।

> उदा – जनाः कार्यक्रमान् दृष्टवन्तः। जनैः कार्यक्रमाः दृष्टाः।

१. आपणिकाः वस्तूनि विक्रीतवन्तः। ------------------------------------------------।

२. छात्राः पाठान् पठितवन्तः। ------------------------------------------------।

३. विद्यार्थिन्यः श्लोकान् उक्तवत्यः। ------------------------------------------------।

४. गायिकाः गीतानि गीतवत्यः। ------------------------------------------------।

५. गृहिण्यः अवकरान् क्षिप्तवत्यः। ------------------------------------------------।

६. महिलाः शाटिकाः क्रीतवत्यः। -----------------------------------------।

७. भगिन्यः कम्बलान् प्रसारितवत्यः। -----------------------------------------।

८. प्राज्ञाः ग्रन्थान् परिशीलितवन्तः। -----------------------------------------।

९. भक्ताः देवान् नमस्कृतवन्तः। -----------------------------------------।

१०. नागरिकाः नायकान् दृष्टवन्तः। -----------------------------------------।

११. ग्रामीणाः मार्गान् निर्मितवन्तः। -----------------------------------------।

१२. तरुणाः सेवाकार्याणि कृतवन्तः। -----------------------------------------।

१३. नटाः प्रेक्षकान् रञ्जितवन्तः। -----------------------------------------।

१४. निर्देशकाः नटान् बोधितवन्तः। -----------------------------------------।

१५. आरक्षकाः प्रदेशान् रक्षितवन्तः। -----------------------------------------।

## ७. विध्यर्थे कर्मणिप्रयोगः कर्तरिप्रयोगः च

हारीतः - इदानीं कुत्र गन्तव्यम् अस्माभिः ?

अपूर्वः - शशाङ्कस्य गृहम् । संस्कृतोत्सवः आचरणीयः खलु ? तदर्थं के के कार्यक्रमाः इति चिन्तनीयम् । अध्यक्षादयः के इति निर्णेतव्यम् । कार्यक्रमस्वरूपं निश्चेतव्यम् ।

हारितः - अरुणस्य गृहं न गन्तव्यं वा ?

अपूर्वः - अरुणः अपि शशाङ्कस्य गृहम् आगच्छेत् । सः न आगतः चेत् तस्य गृहम् अपि गन्तव्यम् । सः एव अस्माकं सङ्घस्य कार्यदर्शी खलु ? अतः तेन सह समालोचनं करणीयम् एव । समालोच्य समग्रा व्यवस्था चिन्तनीया । धनदातृणाम् आवली करणीया, यतः कार्यक्रमव्ययार्थं धनं सङ्ग्रहणीयम् । आह्वानपत्रम् अपि मुद्रापणीयम् ।

हारीतः - मया किं किं करणीयम् ?

अपूर्वः - भवता आह्वानपत्रं लेखनीयम् । मुद्रणालये तत् दातव्यम् । मुद्रणानन्तरं केभ्यश्चित् तत् प्रेषणीयम् । भवता केचन धनदातारः अपि द्रष्टव्याः । ततः संस्कृतोत्सवदिने कार्यक्रमः भवता एव निर्वोढव्यः ।

### विशेषः

* **तव्यत् & अनीयर्**

| | |
|---|---|
| ● गम् + तव्यत् (तव्य) = गन्तव्यम्<br>ज्ञा + तव्यत् (तव्य) = ज्ञातव्यम्<br>दा + तव्यत् (तव्य) = दातव्यम् | तव्यत्-प्रत्ययान्तानि । |
| ● पठ् + अनीयर् (अनीय) = पठनीयम्<br>खाद् + अनीयर् (अनीय) = खादनीयम्<br>क्षाल् + अनीयर् (अनीय) = क्षालनीयम् | अनीयर्-प्रत्ययान्तानि । |

● तव्यत्-प्रत्ययः अनीयर्-प्रत्ययः च कर्मणि विध्यर्थे भवति । एतयोः प्रत्यययोः अर्थः समानः एव । एकस्य एव धातोः प्रत्ययद्वयम् अपि योजयितुं शक्नुमः ।

उदा - क्रीडितव्यम्, क्रीडनीयम्, गन्तव्यम्, गमनीयम्।
श्रोतव्यम् श्रवणीयम्, कर्तव्यम्, करणीयम्।

किन्तु केषाञ्चित् धातूनां तव्यदन्तरूपाणि एव लोके प्रसिद्धानि। यथा - ज्ञातव्यम्, दातव्यम्, प्रष्टव्यम्, स्थातव्यम् इत्यादीनि। एवम् एव पुनः केषाञ्चित् धातूनाम् अनीयर्-प्रत्ययान्तानि रूपाणि एव प्रसिद्धानि। यथा - सूचनीयम्, स्थापनीयम्, खादनीयम् इत्यादीनि। अतः यस्य धातोः यत् रूपं प्रसिद्धं तदेव प्राचुर्येण प्रयुज्यते लोके।

- तव्यत्-अनीयर्-प्रत्ययौ सर्वदा कर्मणि (भावे वा) एव, न कदापि कर्तरि।

*अतः एते प्रयोगाः दोषपूर्णाः - अहं करणीयम्, अहं गन्तव्यम्, अहं स्थातव्यम् . . . इत्यादयः। प्रादेशिकभाषाप्रभावतः एते प्रयोगाः प्रमादेन क्रियन्ते जनैः।*

- तेन गन्तव्यम्, तया ज्ञातव्यम्, भवता करणीयम् इत्यादीनि कर्मणि सन्ति। कर्तरि एतानि वाक्यानि वक्तव्यानि चेत् विधिलिङ्लकारः प्रयोक्तव्यः।

यथा -

| | कर्मणि | कर्तरि |
|---|---|---|
| i. | तेन गन्तव्यम्। | सः गच्छेत्। |
| ii. | तया विषयः ज्ञातव्यः। | सा विषयं जानीयात्। |
| iii. | भवता कार्यं करणीयम्। | भवान् कार्यं कुर्यात्। |
| iv. | मया पाठः पठणीयः। | अहं पाठं पठेयम्। |
| v. | मया चित्रं द्रष्टव्यम्। | अहं चित्रं पश्येयम्। |

- तव्यत्प्रत्ययान्तम् अनीयर्प्रत्ययान्तं च पदं कर्मपदानुगुणं वचनं लिङ्गं च प्राप्नोति। विधिलिङ्रूपं (कर्तरि) तु कर्तृपदानुगुणं वचनं पुरुषं च प्राप्नोति।

**अभ्यासः - १९**

**कस्य कीदृशं दौर्बल्यम् अस्ति इति अधः निर्दिष्टम् अस्ति। तदाधारेण किं करणीयम् इति उपदिशन्तु।**

उदा - रमेशः श्रद्धया पाठं न पठति।
रमेशेन श्रद्धया पाठः पठनीयः।

१. सीता पाकं न करोति। ------------------------------------------ ।

२. गजाननः वृथा समयं यापयति। ------------------------------------ ।

३. गङ्गा विद्यालयं न गच्छति। ---------------------------------------- ।

४. भव्या मातुः आदेशं न पालयति। ------------------------------------ ।

५. ललिता पितुः लेखनीं स्वीकरोति। -------------------------------- ।

६. राकेशः दिवास्वप्नं पश्यति। ------------------------------------------ ।

७. बालकः दन्तधावनं न करोति। ---------------------------------------- ।

८. उद्योगी कार्यालये आकाशवाणीं शृणोति। ---------------------------- ।

९. एषः असत्यं वदति। ---------------------------------------------------- ।

१०. सा दन्तैः नखम् अपनयति। ---------------------------------------- ।

११. छात्राः प्रार्थनां न वदन्ति। ------------------------------------------ ।

१२. बालकाः कोलाहलं कुर्वन्ति। ------------------------------------------ ।

१३. एते श्लोकान् न कण्ठस्थीकुर्वन्ति। ------------------------------------ ।

१४. एताः सर्वदा दूरदर्शनचित्राणि पश्यन्ति। ------------------------------ ।

१५. बालिकाः गृहपाठं न लिखन्ति। -------------------------------------- ।

## अभ्यासः - २०




| | |
|---|---|
| १. भवान् - प्रकोष्ठः | ६. भवान् - प्रातः वस्त्रकटाः |
| २. भवान् - भूस्वामिगृहम् | ७. सुरेशः - ५०० रूप्यकाणि |
| ३. भवान् - क्षीरम् | ८. भवन्तः अङ्गणम् - स्वच्छीकरणम् |
| ४. सः - कर्मकरः | ९. भवान् - पाचिका |
| ५. भवान् - दश अनिलदीपाः | १०. भवान् सर्वं - परिशील ... |
| | ११. अहम् - उत्तराणि दा... |

गङ्गाधरः कश्चन धनिकः। तस्य पुत्र्याः विवाहः निश्चितः। अतः कार्याणि बहूनि। एकदा सर्वे युगपत् तं बहून् प्रश्नान् पृष्टवन्तः। गङ्गाधरस्य उत्तरस्य संक्षेपः चित्रस्य अधः निर्दिष्टः। एतदाधारेण सर्वेषां प्रश्नानाम् उत्तराणि लिखन्तु।

उदा - १. भवता प्रकोष्ठे स्थापनीयम्।

२. ---------------------------------------------------------------------------।

३. ------------------------------------------------------------ ।

४. ------------------------------------------------------------ ।

५. ------------------------------------------------------------ ।

६. ------------------------------------------------------------ ।

७. ------------------------------------------------------------ ।

८. ------------------------------------------------------------ ।

९. ------------------------------------------------------------ ।

१०. ------------------------------------------------------------ ।

११. ------------------------------------------------------------ ।

**अभ्यासः - २१**

१. प्रवेशः निषिद्धः

२. धूमपानं निषिद्धम्

३. मा स्पृशन्तु

४. शिरः बहिः मा प्रसारयन्तु

५. अवकरं मा क्षिपन्तु अत्र

६. पुष्पावचयनं निषिद्धम्






७. वाहनं मा स्थगयन्तु अत्र

८. हुश् ...

९. मा पिबन्तु

१०. जन्तुभ्यः आहारं न यच्छन्तु ।

११. पादपथे सञ्चरन्तु

१२. वेगेन गमनम् अपायकरम् ।

उपरि याः सूचनाः सन्ति तासाम् आधारेण तव्यदन्तरूपाणि अनीयरन्तरूपाणि वा उपयुज्य वाक्यानि लिखन्तु ।

उदा - १. अत्र प्रवेशः न करणीयः ।

२. अत्र ------------------------------------------------------------ ।

३. एतत् ------------------------------------------------------------ ।

४. ------------------------------------------------------------ ।

५. ------------------------------------------------------------ ।

६. ------------------------------------------------------------ ।

७. ------------------------------------------------------------ ।

८. केनाऽपि ------------------------------------------------------------ ।

९. ------------------------------------------------------------ ।

१०. ------------------------------------------------------------ ।

११. ------------------------------------------------------------ ।

१२. ------------------------------------------------------------ ।

**अभ्यासः - २२**

अधस्तनवाक्यानि आधारीकृत्य विधिलिङ्लकारम् उपयुज्य (कर्तरिप्रयोगेण) वाक्यानि लिखन्तु ।

उदा - अध्यापकः छात्रं ताडयति । अध्यापकः छात्रं न ताडयेत् ।

१. छात्रः अध्यापकम् उपहसति । ---------------------------------------- ।

२. पुत्री साहाय्यं न करोति । ---------------------------------------- ।

३. प्रमाणिकः चिटिकां न स्वीकरोति। ------------------------------------ ।

४. रोगी औषधं न पिबति। ------------------------------------------------ ।

५. स्कूटर्चालकः शिरस्त्राणं न धरति। ----------------------------------- ।

६. बालकः ज्येष्ठं न नमस्करोति। --------------------------------------- ।

७. वैद्यः उत्कोचं पृच्छति। ------------------------------------------------ ।

८. सा तिलकं न धरति। ---------------------------------------------------- ।

९. सचिवः लोकसेवां न करोति। ------------------------------------------ ।

१०. छात्राः कलहं कुर्वन्ति। ---------------------------------------------- ।

११. एते साहाय्यं न आचरन्ति। ------------------------------------------ ।

१२. जनाः सदाचारं न पालयन्ति। --------------------------------------- ।

१३. कर्मकराः वृथा समयं यापयन्ति। ------------------------------------ ।

१४. प्रेक्षकाः कोलाहलं कुर्वन्ति। ------------------------------------------ ।

१५. गृहस्थाः सम्प्रदायं न अनुसरन्ति। ------------------------------------ ।

**अभ्यासः - २३**

अधः यानि वाक्यानि कर्तरिप्रयोगे सन्ति तानि कर्मणिप्रयोगे लिखन्तु।

उदा - बालकः पाठं पठेत्। बालकेन पाठः पठनीयः।

१. छात्रः प्रश्नं पृच्छेत्। ------------------------------------------------ ।

२. सेवकः कार्यं कुर्यात्। -------------------------------------------------- ।

३. सः हस्तं प्रक्षालयेत्। ------------------------------------------------- ।

४. गृहिणी भिक्षां दद्यात्। ------------------------------------------------ ।

५. एषः स्यूतं स्वीकुर्यात् । ------------------------------------------------ ।

६. जनाः उपकारं स्मरेयुः । ------------------------------------------------ ।

७. बालिकाः स्वच्छतां कुर्युः । ------------------------------------------------ ।

८. बालकाः कन्दुकं गृह्णीयुः । ------------------------------------------------ ।

९. आरक्षकाः समाजं रक्षेयुः । ------------------------------------------------ ।

१०. नायकाः देशम् अभिवृद्धिपथे नयेयुः । ------------------------------------ ।

११. यानचालकाः नियमान् पालयेयुः । ------------------------------------ ।

१२. लेखकाः उत्तमग्रन्थान् लिखेयुः । ------------------------------------ ।

१३. बालकाः श्लोकान् कण्ठस्थीकुर्युः । ------------------------------------ ।

१४. सर्वे सर्वान् समभावेन पश्येयुः । ------------------------------------ ।

१५. जनाः मार्गे अवकरान् न क्षिपेयुः । ------------------------------------ ।

**अभ्यासः - २४**

अधस्तनवाक्यानि कर्तरिप्रयोगेण (विधिलिङ्लकाररूपम् उपयुज्य) लिखन्तु ।

उदा - भवता श्लोकः वक्तव्यः । भवान् श्लोकं वदेत् ।

१. भवता उच्चैः गीतं न गातव्यम् । ------------------------------------------------ ।

२. तेन कार्यालयः गन्तव्यः । ------------------------------------------------ ।

३. भवता दूरवाणी करणीया । ------------------------------------------------ ।

४. भवत्या धनं दातव्यम् । ------------------------------------------------ ।

५. भवता अहं सूचनीयः । ------------------------------------------------ ।

६. जनन्या पुत्रः न ताडनीयः । ------------------------------------------------ ।

७. मानधनैः दैन्यं न प्रदर्शनीयम् । ---------------------------------------------- ।

८. कार्यशीलैः कष्टं सोढव्यम् । ---------------------------------------------- ।

९. सेवकैः आदेशः पालनीयः । ---------------------------------------------- ।

१०. अनुपस्थितैः दण्डः दातव्यः । ---------------------------------------------- ।

११. सज्जनेन जनाः उपदेष्टव्याः । ---------------------------------------------- ।

१२. भवद्भिः वयं स्मरणीयाः । ---------------------------------------------- ।

१३. कृषिकैः सस्यानि वर्धनीयानि । ---------------------------------------------- ।

१४. निर्वाहकेण चिटिकाः दातव्याः । ---------------------------------------------- ।

१५. सर्वैः पत्रिकाः पठनीयाः । ---------------------------------------------- ।

## ८. कर्मणिप्रयोगः - विशेषांशाः

प्रेक्षकः - निर्देशकमहोदय ! अद्य अस्माभिः सर्वैः अपूर्वं नाटकं दृष्टम् । भवतः निर्देशनम् अपूर्वम् आसीत् । अभिनन्दनानि ।

निर्देशकः - अनुगृहीतोऽस्मि । वस्तुतः निर्देशकेन मया किमपि न कृतम् । समग्रेण गणेन समीचीनः परिश्रमः कृतः । प्रेक्षकैः भवद्भिः सौहार्दभावनया एतत् नाटकं दृष्टम् ।

प्रेशकः - एतेन नाटकाभिनयेन भवद्भिः नटैः वयं सर्वे तोषिताः । एतादृशं नाटकं द्रष्टुम् अस्माभिः अवकाशः प्राप्तः यत् तत् तु सौभाग्यम् ।

निर्देशकः - सहृदयैः भवद्भिः अभिमानेन एतादृशानि वचनानि उच्यन्ते ।

प्रेक्षकः - न तथा श्रीमन् ! अपूर्वं नाटकम् एतत् ।

निर्देशकः - यदि सर्वैः प्रेक्षकैः महान् सन्तोषः प्राप्यते तर्हि अस्माभिः अपि सन्तोषः अनुभूयते ।

प्रेक्षकः - एतादृशानि नाटकानि तत्र तत्र अभिनेतव्यानि । ग्रामीणैः जनैः अपि एतादृशानि नाटकानि द्रष्टव्यानि । प्रेक्षकेषु जनेषु उत्तमा रुचिः उत्पादनीया ।

निर्देशकः - यदि सर्वविधैः प्रेक्षकैः समीचीनः प्रोत्साहः दीयते तर्हि नटैः अस्माभिः अपि महान् उत्साहः प्राप्यते । अस्तु तावत्, यदि दैवेन अनुगृह्यते तर्हि सर्वं साध्यते ।

### विशेषः

प्रयोगपरिवर्तनसमये कर्तुः कर्मणः च विशेषणस्य अपि परिवर्तनम् -

| उदा - कर्तरि | कर्मणि |
|---|---|
| बालकः ग्रन्थं पठति । | बालकेन ग्रन्थः पठ्यते । |
| चतुरः बालकः उत्तमं ग्रन्थं पठति । | चतुरेण बालकेन उत्तमः ग्रन्थः पठ्यते । |
| बुद्धिमान् बालकः श्रेष्ठं ग्रन्थं पठति । | बुद्धिमता बालकेन श्रेष्ठः ग्रन्थः पठ्यते । |
| धीमान् बालकः समीचीनं ग्रन्थं पठति । | धीमता बालकेन समीचीनः ग्रन्थः पठ्यते । |

| कर्तरि | कर्मणि |
| --- | --- |
| सुन्दरी नलिनी मधुरं फलं खादति। | सुन्दर्या नलिन्या मधुरं फलं खाद्यते। |
| गृहिणी नलिनी उत्तमं फलं खादति। | गृहिण्या नलिन्या उत्तमं फलं खाद्यते। |
| चतुरा नलिनी श्रेष्ठं फलं खादति। | चतुरया नलिन्या श्रेष्ठं फलं खाद्यते। |

* प्रयोगपरिवर्तनसमये कर्तुः कर्मणः क्रियापदस्य च परिवर्तनं भवति। अन्येषां पदानां परिवर्तनं न भवति।

उदा - i. बालकः सुधाखण्डेन चित्रं लिखति। - (कर्तरि)
बालकेन सुधाखण्डेन चित्रं लिख्यते। - (कर्मणि)

ii. बालिका प्रतिदिनं सखीभिः सह विद्यालये पाठं पठति। - (कर्तरि)
बालिकया प्रतिदिनं सखीभिः सह विद्यालये पाठः पठ्यते। - (कर्मणि)

iii. अहं भोजनं कृत्वा पाठं पठितुं विद्यालयं गच्छामि। - (कर्तरि)
मया भोजनं कृत्वा पाठं पठितुं विद्यालयः गम्यते। - (कर्मणि)

**अभ्यासः - २५**

अधोनिर्दिष्टानि वाक्यानि कर्मणिप्रयोगेण लिखन्तु।

उदा - दुष्टाः जनाः उत्तमान् जनान् निन्दन्ति।
दुष्टैः जनैः उत्तमाः जनाः निन्द्यन्ते।

१. समर्थः पाचकः रुचिकरं पाकं करोति।

------------------------------------------------------------------------।

२. वृद्धः पितामहः रमणीयां कथां वदति।

------------------------------------------------------------------------।

३. दानशीलः धनिकः उत्तमं वस्त्रं ददाति।

------------------------------------------------------------------------।

४. श्रमशीलः शिक्षकः स्वकीयां भूमिं कर्षति।

-----------------------------------------------------------------|

५. कुपिता भगिनी असमीचीनां लेखनीं क्षिपति।

-----------------------------------------------------------------|

६. धीरः सैनिंकः शत्रुदेशीयान् सैनिकान् मारयति।

-----------------------------------------------------------------|

७. चिन्तामग्नः सः आगतां द्विचक्रिकां न लक्षितवान्।

-----------------------------------------------------------------|

८. भवन्तः सर्वे उत्तमां सेवां कुर्युः।

-----------------------------------------------------------------|

९. भवत्यः सर्वाः दीर्घं कण्ठहारं क्रीणीयुः।

-----------------------------------------------------------------|

१०. सर्वविधाः जनाः समीचीनं प्रोत्साहं दद्युः।

-----------------------------------------------------------------|

**अभ्यासः - २६**

अधोनिर्दिष्टानि वाक्यानि कर्मणिप्रयोगेण परिवर्तयन्तु। प्रयोगपरिवर्तनसन्दर्भे कर्तुः कर्मणः क्रियापदस्य च परिवर्तनं भवति, न अन्येषाम् इत्यंशं स्मरन्तु।

उदा - अहं प्रातः उत्थाय देवं नमामि।
मया प्रातः उत्थाय देवः नम्यते।

१. बालकः मार्गे दण्डेन महिषीं ताडयति।

-----------------------------------------------------------------|

२. गृहस्थः कोपेन गृहात् निर्गत्य कार्यालयं गतवान्।

------------------------------------------------------------------------ ।

३. बालिका प्रातः आसन्दे उपविश्य उच्चैः पाठं पठति।

------------------------------------------------------------------------ ।

४. सः अभ्यासं कर्तुं मित्रेण सह मित्रगृहं गच्छति।

------------------------------------------------------------------------ ।

५. सा पानीयं पीत्वा कटे उपविश्य सङ्गीताभ्यासं करोति।

------------------------------------------------------------------------ ।

६. अम्बा बालान् आहूय प्रीत्या खाद्यं दत्तवती।

------------------------------------------------------------------------ ।

७. अहं प्रातः उत्थाय योगासनं कृत्वा क्षीरं पिबामि।

------------------------------------------------------------------------ ।

८. भाषणं कर्तुं सः उत्साहं न प्रदर्शयति।

------------------------------------------------------------------------ ।

९. किमर्थं भवती इदानीम् अपि श्लोकान् न कण्ठस्थीकरोति ?

------------------------------------------------------------------------ ।

१०. सः लेखनीं कोषे स्थापयित्वा अन्यत्र सर्वत्र अन्विष्टवान्।

------------------------------------------------------------------------ ।

## १. भावेप्रयोगः - वर्तमाने, भूते, विध्यर्थे च

क्रीडाध्यापकः - स्पर्धासक्तैः सर्वैः उपस्थितं वा ?

सर्वे - आं, श्रीमन् !

क्री.अ. - अद्य आरम्भे अस्माकं संस्थायाः अध्यक्षेण किञ्चित् भाष्यते । ततः तेन इतः प्रस्थीयते । कार्यक्रमे मुख्याध्यापकेन अपि उपस्थितेन भूयते । भाषणसमये सर्वैः मौनम् उपवेष्टव्यम् । केनाऽपि मध्ये मध्ये न उत्थातव्यम् । परस्परं न सम्भाषणीयम् । सर्वैः उत्तमबालैः इव प्रवर्तितव्यम् । ज्ञातं खलु ?

सर्वे - आं श्रीमन् ! अस्माभिः सभायां मौनं स्थीयते । उत्तमबालैः भूयते ।

क्री.अ. - साधु । भाषणानन्तरं स्पर्धारम्भः । स्पर्धायां केनापि कारणेन केनाऽपि न कोपितव्यम् । प्रथमस्थानं प्राप्तव्यम् इति उद्देशेन एव सर्वैः प्रयतितव्यम् । किन्तु विजयः न प्राप्तः चेत् न खेदनीयम् । अन्यस्य उत्कर्षं दृष्ट्वा सन्तोष्टव्यम् । स्पर्धाविषये न भेत्तव्यम् । स्वशक्तौ विश्वसितव्यम् । यदा अहं किमपि कार्यं वदामि तदा केनापि न धावनीयं, न पलायनीयं वा ... ।

सर्वे - भवतु श्रीमन्, अस्माभिः भवतः आदेशपालकैः भूयते ।

### विशेषः




एतस्मात् ज्ञायते यत् अकर्मककर्तरिप्रयोगः भावेप्रयोगरूपं प्राप्नोति इति ।

* **भावेप्रयोगे वर्तमाने -**

- क्रियापदं कर्मणिप्रयोगस्य क्रियापदम् इव एव भवति।

  उदा - हस्यते , स्थीयते, रुद्यते, विकस्यते इत्यादयः।

- कर्तृपदं तृतीयाविभक्तौ भवति। (कर्मणिप्रयोगे इव एव)

- क्रियापदं सर्वदा एकवचनान्तं भवति। भावेप्रयोगे क्रियापदस्य द्विवचनान्तं बहुवचनान्तं, मध्यमपुरुषीयम्, उत्तमपुरुषीयं वा रूपं कदापि न भवति।

* **भावेप्रयोगे भूतकाले विध्यर्थे च -**

- हसितम्, स्थितम्, उपविष्टम् इत्यादीनि भूतकालरूपाणि।

- हसितव्यम्, भवितव्यम्, उत्थातव्यम् इत्यादीनि विध्यर्थकरूपाणि।

- उभयविधानि अपि रूपाणि एकवचने नपुंसकलिङ्गे च सदा भवन्ति। उभयविधयोः अपि रूपयोः (भावेप्रयोगीययोः) द्विवचनरूपाणि बहुवचनरूपाणि वा न भवन्ति।

  उदा - भूतकाले - i. रामेण उत्थितम्।
  ii. पुष्पेण विकसितम्।

  विध्यर्थे - i. मया भवितव्यम्।
  ii. भवता उपवेष्टव्यम्।

* भावेप्रयोगे कर्तृपदं बहुवचने अस्ति चेदपि क्रियापदम् एकवचने एव। यतः भावेप्रयोगे (कर्मणिप्रयोगे इव) कर्तृपदस्य क्रियापदस्य च सम्बन्धः न भवति।

* अहं पण्डितः भवामि। - कर्तरिप्रयोगः
  मया पण्डितेन भूयते। - भावेप्रयोगः

  'पण्डितः' इति शब्दः 'अहम्' इत्यस्य विशेषणम्। अतः कर्तृपदस्य यथा तृतीयाविभक्तिः तथा तद्विशेषणस्य अपि तृतीया भवति।

  उदा - i. ते उत्तीर्णाः भवन्ति। - (कर्तरि) }
  तैः उत्तीर्णैः भूयते। - (भावे) } वर्तमानकाले

ii. ते उत्तीर्णाः भवेयुः। - (कर्तरि)
तैः उत्तीर्णैः भवितव्यम्। - (भावे) } विध्यर्थे

**अभ्यासः - २७**

अधोनिर्दिष्टानि अकर्मककर्तरिवाक्यानि भावेप्रयोगे वर्तमाने, भूते, विध्यर्थे च लिखन्तु।

उदा - बालकः उत्तिष्ठति। १. बालकेन उत्थीयते।
२. बालकेन उत्थितम्। ३. बालकेन उत्थातव्यम्।

१. सः उपविशति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

२. मल्लिका विकसति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

३. बालिका रोदिति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

४. एषा पतति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

५. व्याघ्रः गर्जति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

६. बालकाः धावन्ति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

७. नटाः नृत्यन्ति। १. ------------------------------------|
२. ------------------------------| ३. ------------------------------|

८. जनाः स्नान्ति। १. ------------------------------------------।

२. -----------------------------------। ३. -----------------------------------।

९. अहं तिष्ठामि। १. ------------------------------------------।

२. -----------------------------------। ३. -----------------------------------।

१०. भवन्तः अपसरन्ति। १. ------------------------------------------।

२. -----------------------------------। ३. -----------------------------------।

**अभ्यासः - २८**

अधोनिर्दिष्टानि वाक्यानि यस्मिन् काले अर्थे वा सन्ति, तस्मिन् काले अर्थे वा भावेप्रयोगीयाणि वाक्यानि लिखन्तु।

| | | | |
|---|---|---|---|
| उदा - i. | ते उत्थितवन्तः। | ii. | एते हसन्ति। |
| | तैः उत्थितम्। | | एतैः हस्यते। |

१. अग्रजः प्रस्थितवान्। ------------------------------------------------------।

२. चोराः पलायितवन्तः। ------------------------------------------------------।

३. सर्वे सन्तुष्येयुः। ------------------------------------------------------।

४. बालकः कुप्यति। ------------------------------------------------------।

५. सा प्रयतते। ------------------------------------------------------।

६. भवान् न पतेत्। ------------------------------------------------------।

७. बालकाः सम्भाषन्ते। ------------------------------------------------------।

८. विमानम् उड्डयते। ------------------------------------------------------।

९. भवत्यः न धावेयुः। ------------------------------------------------------।

१०. भक्तः विश्वसितवान्। ------------------------------------------------------।

११. सर्वे उपविष्टवन्तः । ------------------------------------------------ ।

१२. नक्षत्रं स्फुरति । ------------------------------------------------ ।

१३. वृक्षाः कम्पन्ते । ------------------------------------------------ ।

१४. एते न विहरेयुः । ------------------------------------------------ ।

१५. वस्त्रं नश्यति । ------------------------------------------------ ।

**अभ्यासः - २९**

सर्वेषां मातापितॄणाम् अपेक्षा - मम पुत्रः एवं स्यात्, तथा स्यात् इति । तादृश्यः काश्चन अपेक्षाः अधः लिखिताः सन्ति । तानि वाक्यानि भावेप्रयोगेण लिखन्तु । (कर्तुः विशेषणस्य अपि भावेप्रयोगे तृतीया भवति इति स्मरन्तु ।)

उदा - मम पुत्रः वैद्यः भवेत् । मम पुत्रेण वैद्येन भवितव्यम् ।

१. मम पुत्रः समाजसेवकः भवेत् । ------------------------------------------------ ।

२. मम पुत्री उद्योगिनी भवेत् । ------------------------------------------------ ।

३. मम भगिनी उद्योगिनी भवेत् । ------------------------------------------------ ।

४. मम अनुजः क्रीडानिपुणः भवेत् । ------------------------------------------------ ।

५. मम पितृव्यः महाप्रबन्धकः भवेत् । ------------------------------------------------ ।

६. मम पुत्रः प्रचारकः भवेत् । ------------------------------------------------ ।

७. मम पुत्रः दुष्टः न भवेत् । ------------------------------------------------ ।

८. मम पुत्रः उद्योगरहितः न भवेत् । ------------------------------------------------ ।

९. मम पुत्री विवाहिता भवेत् । ------------------------------------------------ ।

१०. मम पुत्राः धनिकाः भवेयुः । ------------------------------------------------ ।

११. मम पुत्र्यः धर्मपालिकाः भवेयुः । ------------------------------------------------ ।

१२. मम पुत्र्यः पत्यनुकूलाः भवेयुः। ------------------------------------------।

१३. मम पुत्राः कुलदीपकाः भवेयुः। ------------------------------------------।

१४. मम बान्धवाः तृप्ताः भवेयुः। ------------------------------------------।

१५. सर्वे शान्ताः तृप्ताः च भवेयुः। ------------------------------------------।

**अभ्यासः - ३०**

अधस्तनवाक्यानि विध्यर्थकेन भावेप्रयोगेण लिखन्तु।

उदा - भवान् मम सहायकः भवेत्। भवता मम सहायकेन भवितव्यम्।

१. भवन्तः विचारशीलाः भवेयुः। ------------------------------------------।

२. सर्वे उपस्थिताः भवेयुः। ------------------------------------------।

३. कोऽपि अनुपस्थितः न भवेत्। ------------------------------------------।

४. काऽपि अलसा न भवेत्। ------------------------------------------।

५. भवन्तः सर्वे उत्तीर्णाः भवेयुः। ------------------------------------------।

६. भवान् जागरूकः भवेत्। ------------------------------------------।

७. जनाः सत्यप्रियाः भवेयुः। ------------------------------------------।

८. राजकीयपुरुषाः प्रामाणिकाः भवेयुः। ------------------------------------------।

९. वणिग्जनाः वञ्चकाः न भवेयुः। ------------------------------------------।

१०. गृहस्थाः जागरूकाः भवेयुः। ------------------------------------------।

११. गृहिण्यः पतिव्रताः भवेयुः। ------------------------------------------।

१२. राष्ट्रनायकाः जनप्रियाः भवेयुः। ------------------------------------------।

१३. अहं समाजसेवकः भवेयम्। --------------------------------------------।

१४. वयं राष्ट्रभक्ताः भवेम। ----------------------------------------------।

१५. वचनं प्रियं हितकरं च भवेत्। --------------------------------------------।

१६. भवन्तः सर्वे शीघ्रम् उत्तिष्ठेयुः। --------------------------------------------।

१७. स्पर्धाप्रियाः सर्वे वेगेन धावेयुः। ------------------------------------------।

१८. प्रामाणिकाः छात्राः पठने विश्वस्येयुः। ------------------------------------।

१९. सर्वाः बालिकाः अत्रैव तिष्ठेयुः। ------------------------------------------।

२०. वयं सर्वे १०.०० वादने प्रतिष्ठेमहि। ------------------------ प्रस्थातव्यम्।

## १०. लृङ्लकारः

पिता - वत्स ! व्यजनं न चलति ! न समीकारितवान् वा ?

पुत्रः - यदि भवान् 'कारयतु' इति अवदिष्यत् तर्हि अहम् अकारयिष्यम् ।

पिता - शालागमनसमये यदि विद्युत्कारः सूचितः स्यात् तर्हि एतावता व्यजनं सम्यक् अभविष्यत् । भवान् कारयेत् इति मया चिन्तितम् । अन्यथा अहम् एव गमनसमये आपणिकम् असूचयिष्यम् ।

पुत्रः - भवान् यदि उक्तवान् स्यात् तर्हि अहम् अवश्यम् अकारयिष्यम् ।

पिता - अस्तु तावत् । अहो, रजकाय दातव्यानि वस्त्राणि अत्रैव सन्ति । यदि प्रातः एतानि रजकाय दत्तानि स्युः तर्हि श्वः प्रातःकाले सः प्रत्यर्पितवान् स्यात् ।

पुत्रः - भवान् यदि माम् अवदिष्यत् तर्हि अहम् अदास्यम् । यदि भवान् मातरं वदेत् तर्हि सा वा दद्यात् । उभयम् अपि न कृतं भवता ।

पिता - यदि भवतः माता स्वच्छीकरणार्थम् अत्र आगतवती स्यात् तर्हि एतानि अवश्यं दृष्टवती स्यात्, रजकाय दत्तवती स्यात् अपि । किन्तु सा अद्य अत्र न आगतवती इति भाति ।

पुत्रः - कर्मकरी स्वच्छतां कृतवती स्यात् । अतः मात्रा न दृष्टम् ।

### विशेषः

* **लृङर्थः -**

यत्र क्रियाद्वयस्य कार्याकारणभावः भवति, यत्र क्रिया सञ्जाता न भवति च तत्र लृङ्लकारस्य प्रयोगः ।

उदा - भवान् यदि अवदिष्यत् तर्हि अहम् अकरिष्यम् ।

अत्र - i. करणस्य कथनस्य च कार्यकारणभावः अस्ति ।

ii. भवान् न उक्तवान्, अहं न कृतवान् इति उभयत्र अपि क्रियायाः असमाप्तिः दृश्यते ।

* **लृङर्थः त्रिधा वक्तुं शक्यते -**

| |
|---|
| भवान् न उक्तवान् । |
| अहं न कृतवान् । |

i. यदि भवान् अवदिष्यत् तर्हि अहम् अकरिष्यम् ।
ii. यदि भवान् वदेत् तर्हि अहं कुर्याम् ।
iii. यदि भवान् उक्तवान् स्यात् तर्हि अहं कृतवान् स्याम् ।

- **अत्र - प्रथमे प्रकारे भविष्यत्कालरूपं ज्ञातव्यम्, अडागमव्यवस्था ज्ञातव्या च ।**

उदा - i. गच्छति — गमिष्यति —— अगमिष्यत् ।
ii. पश्यति — द्रक्ष्यति —— अद्रक्ष्यत् ।

- द्वितीये प्रकारे विधिलिङ्रूपं ज्ञातव्यम् ।

- तृतीये प्रकारे क्तवतुप्रत्ययान्तरूपेण सह 'स्यात्' इत्यादयः योजनीयाः ।

- एषः तृतीयः* प्रकारः सरलतमः । अतः एतस्य एव प्रयोगः सौलभ्याय । तथापि अभ्यासदृष्ट्या त्रिविधाः अपि अभ्यासाः अत्र सूचिताः ।

**अभ्यासः - ३१**

- अधोनिर्दिष्टानां वाक्यानां तात्पर्यम् अवगत्य योग्यम् उत्तरं ' ✓ ' **चिह्नेन** अङ्कयन्तु ।

| |
|---|
| उदा - यदि भवान् अवदिष्यत् तर्हि अहम् अकरिष्यम् । |
| - भवान् उक्तवान् ( ) न उक्तवान् । ( ✓ ) |
| - अहं कृतवान् । ( ✓ ) न कृतवान् । ( ✓ ) |

१. यदि भवान् तम् असूचयिष्यत् तर्हि सः कार्यम् अकरिष्यत् ।

- भवान् तं सूचितवान् । (   )   न सूचितवान् । (   )

- सः कार्यं कृतवान् । (   )   न कृतवान् । (   )

* भूतकालच्छाया यत्र अस्ति तत्रैव एतस्य प्रयोगः सम्भवति । वयं व्यवहारे लृङर्थं, यत्र भूतकालच्छाया भवति तत्रैव इच्छामः । अतः एतस्य एव क्रमस्य स्वीकारः अत्र सूचितः ।

२. यदि भवती वस्त्रम् अदास्यत् तर्हि सः अक्षालयिष्यत् ।

- भवती वस्त्रं दत्तवती । ( ) न दत्तवती । ( )

- सः वस्त्रं क्षालितवान् । ( ) न क्षालितवान् । ( )

३. यदि सा अत्र आगमिष्यत् तर्हि वस्त्राणि अद्रक्ष्यत् ।

- सा अत्र आगतवती । ( ) न आगतवती । ( )

- सा वस्त्राणि दृष्टवती । ( ) न दृष्टवती । ( )

४. यदि भवन्तः न अस्मारयिष्यन् तर्हि अहं न अगमिष्यम् ।

- भवन्तः स्मारितवन्तः । ( ) न स्मारितवन्तः । ( )

- अहं गतवान् । ( ) न गतवान् । ( )

५. यदि सः उत्तरम् अज्ञास्यत् तर्हि मौनं न अस्थास्यत् ।

- सः उत्तरं ज्ञातवान् । ( ) न ज्ञातवान् । ( )

- सः मौनं स्थितवान् । ( ) न स्थितवान् । ( )

६. यदि दर्पणः भूमौ अपतिष्यत् तर्हि भग्नः अभविष्यत् ।

- दर्पणः भूमौ पतितः । ( ) न पतितः । ( )

- दर्पणः भग्नः जातः । ( ) न जातः । ( )

**अभ्यासः - ३२**

लृङ्लकाररूपयुक्तानां वाक्यानां निर्माणं कुर्वन्तु ।

उदा - भवान् न आगतवान् । - अहं न दत्तवान् ।
यदि भवान् आगमिष्यत् तर्हि अहम् अदास्यम् ।

१. तम् अहं न दृष्टवान् । - (अहं) विषयं न सूचितवान् ।

------------------------------------------------------------------ ।

२. सः वेगेन न गतवान् । - अपघातः न जातः ।

------------------------------------------------------------------------ ।

३. अपघातः न जातः । - दन्ताः न पतिताः ।

------------------------------------------------------------------------ ।

४. दन्ताः न पतिताः । - वैद्यः न दृष्टः ।

------------------------------------------------------------------------ ।

५. अहं न पठितवान् । - (अहं) प्रथमश्रेणीं न प्राप्तवान् ।

------------------------------------------------------------------------ ।

६. अहं न स्मृतवान् । - (अहं) पत्रं न लिखितवान् ।

------------------------------------------------------------------------ ।

७. अहं न दृष्टवान् । - सः एवं कृतवान् ।

------------------------------------------------------------------------ ।

८. सः कुपितः न जातः । - (सः) भवन्तं न निन्दितवान् ।

------------------------------------------------------------------------ ।

९. कार्यं न समाप्तम् । - निद्रां न कृतवान् ।

------------------------------------------------------------------------ ।

१०. वृक्षः मम उपरि न पतितः । - अहं न मृतः ।

------------------------------------------------------------------------ ।

**अभ्यासः - ३३**

लृङर्थे विधिलिङ्लकाररूपम् उपयुज्य वाक्यानां निर्माणं कुर्वन्तु ।

उदा - भवान् न पृष्टवान् । सः न दत्तवान् ।
यदि भवान् पृच्छेत् तर्हि सः दद्यात् ।

१. सः न दत्तवान् । अहं न आनीतवान् ।

---------------------------------------------------------------------- ।

२. अहं ग्रामं न गतवान् । (अहं) पितामहं न दृष्टवान् ।

---------------------------------------------------------------------- ।

३. अम्बा न दत्तवती । अहं न खादितवान् ।

---------------------------------------------------------------------- ।

४. रक्षकः आसीत् । चोरः चौर्यं न कृतवान् ।

---------------------------------------------------------------------- ।

५. दण्डः दृढः आसीत् । (दण्डः) भग्नः न अभवत् ।

---------------------------------------------------------------------- ।

६. सः परिश्रमं न कृतवान् । (सः) फलं न प्राप्तवान् ।

---------------------------------------------------------------------- ।

७. सः सम्यक् न श्रुतवान् । (सः) तात्पर्यं न ज्ञातवान् ।

---------------------------------------------------------------------- ।

८. सः पर्वतम् आरूढवान् । कीर्तिं प्राप्तवान् ।

---------------------------------------------------------------------- ।

९. ते सम्यक् क्रीडितवन्तः । जयं प्राप्तवन्तः ।

---------------------------------------------------------------------- ।

१०. अहं स्यूतं नीतवान् । (अहं) कष्टं न अनुभूतवान् ।

---------------------------------------------------------------------- ।

## अभ्यासः - ३४

लृङर्थे क्त/क्तवतुप्रत्ययान्तेन रूपेण सह 'स्यात्' इत्यादीनि उपयुंज्य वाक्यानि रचयन्तु ।

> उदा - भिक्षुकः न याचितवान् । धनिकः न दत्तवान् ।
> यदि भिक्षुकः याचितवान् स्यात् तर्हि धनिकः दत्तवान् स्यात् ।

१. निद्रा न आगता । सः निद्रां न कृतवान् ।

------------------------------------------------------------------- ।

२. वाक्यं न स्फुरितम् । सः उत्तरं न लिखितवान् ।

------------------------------------------------------------------- ।

३. जलम् आगतम् । सा स्नानं कृतवती ।

------------------------------------------------------------------- ।

४. आह्वानम् आसीत् । वयं गतवन्तः ।

------------------------------------------------------------------- ।

५. सः मां ताडितवान् । अहं तं ताडितवान् ।

------------------------------------------------------------------- ।

६. समयः न आसीत् । अहं न आगतवान् ।

------------------------------------------------------------------- ।

७. देवः अनुगृहीतवान् । ते कार्यं साधितवन्तः ।

------------------------------------------------------------------- ।

८. विद्युत् गता । अहं कार्यं न समापितवान् ।

------------------------------------------------------------------- ।

९. पत्नी मातृगृहं गतवती । अहम् उपाहारमन्दिरं गतवान् ।

------------------------------------------------------------------- ।

१०. सः मां गृहीतवान् । अहं न पतितवान् ।

------------------------------------------------------------------- ।

## ११. न - न वा, न केवलम् - अपि तु इत्यादयः

माता - वत्स ! क्रीडा समाप्ता वा ? भवान् एवं क्रीडन् भवति चेत् न उत्तीर्णः भविष्यति, न वा प्रगतिं साधयिष्यति।

पुत्रः - किमर्थं तथा वदति भवती ? अहं न केवलं क्रीडामि, अपि तु पठामि अपि।

माता - भवान् सदा क्रीडन् भवति इति अभिप्रायः न केवलं मम, अपि तु गृहसदस्यानां सर्वेषाम्।

पुत्रः - अहं सदा क्रीडामि। सत्यम्। किन्तु अनुत्तीर्णः न भवामि। पश्यतु, मम परीक्षाफलम्। अहं न गतवर्षे अनुत्तीर्णः, न वा प्रगतवर्षे।

माता - किन्तु मम आशा यत् भवान् न केवलं शालायाः प्रथमः भवेत्, अपि तु राज्यस्य अपि प्रथमः भवेत् इति।

पुत्रः - अम्ब, न केवलं भवती, अपि तु सर्वे मातापितरः अपि एवम् एव इच्छन्ति। 'मम पुत्रः वैद्यः भवेत्, मम पुत्रः तन्त्रज्ञः भवेत्' इति सर्वेषाम् अपेक्षा। न दृश्यते पुत्रस्य इच्छा, न वा पुत्रस्य प्रतिभा।

माता - तर्हि पुत्रः यत् आचरति तत् मौनं द्रष्टव्यम् इति वा भवतः आशयः ?

पुत्रः - तथा न अम्ब ! जीवने न केवलं पठनं प्रधानम्, अपि तु क्रीडादीनि अपि प्रधानानि एव। क्रीडादितः बलवृद्धिः, मनोरञ्जनं, बुद्धिविकासः च सम्भवति।

### विशेषः

* **'न' कारेण सहिताः काश्चन वाक्यरचनाः -**

- **न - न वा**
  i. सः न दुष्टः, न वा परपीडकः।
  ii. भवान् न ददातु, न वा क्रीणातु।
  iii. मेघावृते आकाशे न चन्द्रः दृश्यते, न वा नक्षत्राणि।

- **न केवलम् - अपि तु** - i. न केवलं जनाः मूर्खाः, अपि तु नायकाः अपि मूर्खाः ।
  ii. सः न केवलं काव्यं लिखति, अपि तु चित्रम् अपि रचयति ।
  iii. क्रीडातः न केवलं मनोरञ्जनम्, अपि तु बुद्धिविकासः अपि ।

- **न - अपि तु** - i. भवान् निद्रां न करोतु । अपि तु पठतु ।
  ii. भवता धनं न व्ययीकरणीयम्, अपि तु सङ्ग्रहणीयम् ।
  iii. भवत्या शिशुः न ताडनीयः, अपि तु लालनीयः ।

- **-, न तु** - i. अद्य पाकं भगिनी कृतवती, न तु माता ।
  ii. एषा शाटिका मद्रास्नगरे क्रीता, न तु मैसूरुनगरे ।
  iii. सज्जनः कलङ्कात् भीतः भवति, न तु कष्टात् ।

**अभ्यासः - ३५**

**न, न वा**

| व्यक्तिः/वस्तु | न | न वा |
|---|---|---|
| रामः | दुर्जनः | लोभी |
| उदा - रामः | न दुर्जनः, | न वा लोभी । |
| १. एषा | अलसा | कठोरभाषिणी |
| २. सः | चतुरः | क्रियाशीलः |
| ३. छात्राः | दुर्बलाः | मन्दमतयः |
| ४. भारतीयाः | भीरवः | अभिमानशून्याः |
| ५. पारितोषिकं | रामाय | सीतायै |
| ६. क्षीरं | पुत्राय | पुत्र्यै |
| ७. पुस्तकं | मम | भवतः |
| ८. सः | गृहे (तिष्ठति) | विद्यालये |
| ९. पुस्तकं | आपणात् (आनीतं) | मित्रगृहात् |
| १०. कार्यं | तेन (कृतं) | एतेन |

उदाहरणानुगुणं व्यक्ति सन्दर्भं वा वर्णयन्तु।

१. ------------------- न ------------------- न वा ------------------- ।

२. ------------------- न ------------------- न वा ------------------- ।

३. ------------------- न ------------------- न वा ------------------- ।

४. ------------------- न ------------------- न वा ------------------- ।

५. ------------------- न ------------------- न वा ------------------- ।

६. ------------------- न ------------------- न वा ------------------- ।

७. ------------------- न ------------------- न वा ------------------- ।

८. ------------------- न ------------------- न वा ------------------- ।

९. ------------------- न ------------------- न वा ------------------- ।

१०. ------------------- न ------------------- न वा ------------------- ।

**अभ्यासः ३६**

**न केवलम्, अपि तु**

| | न केवलम् | अपि तु |
|---|---|---|
| अद्य भाषणकर्ता | भवान् | अहम् |
| उदा - अद्य भाषणकर्ता | न केवलं भवान्, | अपि तु अहम् अपि। |
| १. व्याकरणस्य अध्येतारः | वयम् | भवन्तः |
| २. प्रवासार्थम् आगच्छन्ति | छात्राः | अध्यापकाः |
| ३. पिता कार्यम् उक्तवान् | माम् | भवन्तम् |
| ४. एषा वार्ता उक्ता | भवता | तेन |
| ५. देशसेवा कृता | नायकैः | सामान्यैः |
| ६. एतत् फलं | भवत्यै | तस्मै |
| ७. सः भीतः | व्याघ्रात् | मार्जारात् |
| ८. गृहकार्यस्य दायित्वं | मातुः | पितुः |
| ९. तस्य कोपः | गृहे | कार्यालये |
| १०. मात्रा यत् दत्तं तत् | भवते | मह्यम् |

१. ------------------------------------------------------------------ ।

२. ------------------------------------------------------------------ ।

३. ------------------------------------------------------------------ ।

४. ------------------------------------------------------------------ ।

५. ------------------------------------------------------------------ ।

६. ------------------------------------------------------------------ ।

७. ------------------------------------------------------------------ ।

८. ------------------------------------------------------------------ ।

९. ------------------------------------------------------------------ ।

१०. ------------------------------------------------------------------ ।

**अभ्यासः - ३७**

**न, अपि तु,** + **लोट्**

| कर्ता | न | अपि तु |
|---|---|---|
| भवान्/भवती | समय याप्<br>लूनायानेन गम्<br>निद्रां कृ<br>सम्मार्जनं कृ<br>व्यर्थं जल्प्<br>धाव्<br>रोदनं कृ<br>कथां पठ्<br>इतस्ततः पश्य्<br>शयनं कृ<br>क्रीडार्थं गम् | पुस्तक पठ्<br>द्विचक्रिकया गम्<br>पाठं पठ्<br>रङ्गवल्लीं लिख्<br>कार्यं कृ<br>मन्दं गम्<br>धैर्यं वह्<br>अनुवादं कृ<br>साक्षात् गम्<br>शिशुं लाल्<br>श्लोकं कण्ठस्थीकृ |

किं करोतु, किं न करोतु इति उपरि निर्दिष्टम् अस्ति । तदाधारेण उदाहरणानुगुणं वाक्यानि लिखन्तु ।

उदा - १. भवान् समयं न यापयतु, अपि तु पुस्तकं पठतु ।

२. ------------------------------------------------------------ ।
३. ------------------------------------------------------------ ।
४. ------------------------------------------------------------ ।
५. ------------------------------------------------------------ ।
६. ------------------------------------------------------------ ।
७. ------------------------------------------------------------ ।
८. ------------------------------------------------------------ ।
९. ------------------------------------------------------------ ।
१०. ------------------------------------------------------------ ।
११. ------------------------------------------------------------ ।

**अभ्यासः - ३८**

न, अपि तु + अनीयर्/तव्यत्

| | | | न | अपि तु |
|---|---|---|---|---|
| भवता | १. | गुरुः | निन्द् | नमस्कृ |
| | २. | कार्यं | वद् | कृ |
| | ३. | पाठः | पठ् | लिख् |
| | ४. | क्षीरं | पा | आनी |
| | ५. | फलं | खाद् | कर्त् |
| | ६. | सः | वद् | बोध् |
| | ७. | श्लोकः | पठ् | कण्ठस्थीकृ |
| | ८. | पाकशाला | क्षाल् | मार्ज् |
| | ९. | धनं | दा | संग्रह् |
| | १०. | कटः | प्रसार् | पुटीकृ |
| | ११. | लेखनी | क्षिप् | रक्ष् |

भवता किं न करणीयम् इति निर्दिश्य किं करणीयम् इति अपि उपरि निर्दिष्टम् अस्ति । उदाहरणं दृष्ट्वा तदनुसारं वाक्यानि लिखन्तु ।

उदा - १. भवता गुरुः न निन्दनीयः, अपि तु नमस्करणीयः ।

२. ------------------------------------------------------------ ।

३. ------------------------------------------------------------ ।

४. ------------------------------------------------------------ ।

५. ------------------------------------------------------------ ।

६. ------------------------------------------------------------ ।

७. ------------------------------------------------------------ ।

८. ------------------------------------------------------------ ।

९. ------------------------------------------------------------ ।

१०. ------------------------------------------------------------ ।

११. ------------------------------------------------------------ ।

## अभ्यासः - ३९

–, न तु

| | कर्ता/कर्त्री | न तु |
|---|---|---|
| एतत् कार्यं कृतवान् | रामः | कृष्णः |
| उदा - एतत् कार्यं रामः | कृतवान्, | न तु कृष्णः । |
| १. पुस्तकं नीतवती | सीता | गीता |
| २. क्षीरं पीतवान् | रमेशः | नागेशः |
| ३. मातुः साहाय्यं कृतवान् | अहम् | भवान् |
| ४. प्रश्नं पृष्टवान् | अध्यापकः | पिता |
| ५. फलम् आनीतवान् | मातुलः | सहोदरः |

१. ------------------------------------ न तु ------------------------- ।

२. ------------------------------------ " ------------------------- ।

३. ------------------------------------ " ------------------------- ।

४. ------------------------------------ " ------------------------- ।

५. ------------------------------------ " ------------------------- ।

**अभ्यासः - ४०**

उपरि यत् उदाहरणं दर्शितं तत् प्रथमाविभक्तौ अस्ति । एतेन एव क्रमेण द्वितीयादि-विभक्तिषु अपि वाक्यानि रचनीयानि । उदाहरणम् अनुसरन्तः वाक्यानि रचयन्तु ।

| | | कर्म | न तु |
|---|---|---|---|
| | अहम् उक्तवान् | भवान् | रामः |
| | उदा - अहं भवन्तम् उक्तवान्, | न तु रामम् । | |
| १. | सः आहूतवान् | अहम् | भवान् |
| २. | एषः दृष्टवान् | अयोध्या | मथुरा |
| ३. | रामः नमस्कृतवान् | माता | भगिनी |
| ४. | नागरिकः निवेदितवान् | राजा | मन्त्री |
| ५. | अनुजः ताडितवान् | स्वसा | भ्राता |
| ६. | निर्देशकः सूचितवान् | सेवाव्रतिनः | कार्यकर्तारः |
| ७. | बालकः दृष्टवान् | संन्यासिनः | विद्यार्थिनः |
| ८. | कृषिकः पालयति | धेनवः | महिष्यः |
| ९. | अध्यापकः ताडितवान् | विद्यार्थिन्यः | विद्यार्थिनः |
| १०. | ग्राहकः निन्दितवान् | अधिकारिणः | भ्रातरः |

## १२. न, मा, इति, इत्यादयः ...

अग्रजा - अहो हो हो, भवान् वा !

अनुजः - आम्, अहम् एव । मां कं भावितवती भवती ?

अग्रजा - भवन्तं मार्जारं भावितवती आसम् । शब्दम् अकृत्वा, आगमनसूचनां च अदत्त्वा भवान् आगतवान् ।

अनुजः - असत्यं वदति भवती । भवती प्रायः मां चोरं भावितवती आसीत् । अथवा अपरिचितं भावितवती आसीत् ।

अग्रजा - (कोपमिश्रितस्वरेण) न । भवन्तं व्याघ्रं भावितवती आसम् । भवन्तं लुण्ठाकं भावितवती आसम् ।

अनुजः - भगिनि, अद्य मम विद्यालये किम् अभवत् इति भवती जानाति वा ? रसायनशास्त्रस्य नूतनः अध्यापकः आगतः । अहं तं छात्रं मत्वा तेन सह बहु वार्तालापं कृतवान् ।

अग्रजा - अविचार्य कृतस्य कार्यस्य फलम् एतत् । सः भवन्तं मूर्खं भावितवान् स्यात् । इतः परम् एवम् अविचिन्त्य मा व्यवहरतु । अद्य प्रातः भवान् मम अनुमतिम् अस्वीकृत्य लेखनीं स्वीकृतवान् । मम प्रकोष्ठतः लेखनी, अङ्कनी, कर्तरी, स्यूतः इत्यादीनि कदापि न स्वीकरोतु । अनुमतिम् अस्वीकृत्य मम प्रकोष्ठम् एव मा प्रविशतु ।

अनुजः - ह्यः भवती माम् अपृष्ट्वा मम कथापुस्तकं नीतवती आसीत् । परह्यः माम् अनुक्त्वा करवस्त्रं नीतवती आसीत् । इतःपरं भवती अपि मम प्रकोष्ठात् करवस्त्रं, योजिनी, पत्रसूची, मापनपट्टिका इत्यादीनि मा स्वीकरोतु ।

### विशेषः

- **'न' इत्यस्य अन्वयः -**

    i. न कदापि अहम् असत्यं वदामि । - इत्येतस्मिन् वाक्ये 'न' इति पदं यद्यपि वाक्यस्य आरम्भे अस्ति, तथापि तस्य अन्वयः तु सदा प्रधानक्रियापदेन 'वदामि' इत्यनेन सह एव । एवं 'न'कारः वाक्ये

यत्र कुत्रापि भवति चेदपि तस्य अन्वयः तु प्रधानक्रियापदेन सह एव ।

ii. सः न उक्तवान्, गृहं गतवान् च । - इत्येषः भावः अस्माभिः एकवाक्येन वक्तव्यः । तदा -

सः न उक्त्वा गृहं गतवान् । - अशुद्धम्
सः अनुक्त्वा गृहं गतवान् । - शुद्धम्

प्रथमवाक्ये न उक्त्वा इत्यनयोः समासः न कृतः । द्वितीये वाक्ये 'अनुक्त्वा' (न + उक्त्वा) इति समासः कृतः ।

प्रथमवाक्यस्य तात्पर्यम् एवं भवति - 'सः उक्तवान्, गृहं न गतवान् च' इति । किन्तु अस्माकम् अपेक्षा तु - 'सः न उक्तवान्, गृहं गतवान् च' इति खलु ? एतं भावं प्राप्तुम् 'अनुक्त्वा' इति समासः करणीयः एव ।

अतः 'न' विषये एवं निर्णयः -

यत्र प्रधानक्रियया सह 'न' इत्यस्य अन्वयः अपेक्ष्यते तत्र समासः न करणीयः । यत्र अवान्तरक्रियया (क्त्वान्त-तुमुन्नन्त-शत्रन्तादिभिः निर्दिष्टया) अन्वयः अपेक्ष्यते तत्र समासः अवश्यं करणीयः ।

उदा - i. सः कार्यम् अकृत्वा निद्रां कृतवान् । - (क्त्वान्तेन समासः)
ii. कार्यम् अकर्तुं को वा इच्छति ? - (तुमुन्नन्तेन समासः)
iii. सः कार्यम् अकुर्वन् दिनानि यापयति । - (शत्रन्तपदेन समासः)

iii. न + स्वरादिपदम् = अन् + स्वरादिपदम्
न + व्यञ्जनादिपदम् = अ + व्यञ्जनादिपदम्

iv. न + चिन्तयित्वा = अचिन्तयित्वा
न + पठित्वा = अपठित्वा
न + अङ्कयित्वा = अनङ्कयित्वा
} क्त्वान्तेन सह समासः अत्र । अतः समस्तं पदम् अपि क्त्वान्तम् * एव ।

(* क्त्वान्तेन सह 'नकार' समासः (नञ्समासः) यदा क्रियते तदा क्त्वान्तपदम् एव तिष्ठति । नकारस्य उपसर्गत्वम् उपसर्गतुल्यत्वं वा नास्तीत्यतः 'ल्यप्' न भवति ।)

न + आहूय = अनाहूय } ल्यबन्तेन सह समासः अत्र।
न + प्रक्षाल्य = अप्रक्षाल्य } अतः समस्तं पदम् अपि
न + प्राप्य = अप्राप्य } ल्यबन्तम् एव।

* **मा**

'मा' इत्यस्य अव्ययस्य निषेधः अर्थः।

i. सः गृहे नास्ति।
रामः न पठति।
तेन न गन्तव्यम्।
} न = अभावः
अस्मिन् अर्थे 'मा' प्रयोक्तुं न शक्यते।

ii. भवान् न पठतु।
भवती न गच्छतु।
सः न तिष्ठातु।
} न = निषेधः
अस्मिन् अर्थे 'मा' अपि प्रयोक्तुं शक्यते।

प्रायः निषेधः लेट्लकारघटितवाक्येन सूच्यते। अतः एवं सामान्यधारणा अनुसर्तुं शक्या यत् -

- लोटलकारयुक्ते वाक्ये 'मा' ('न'कारः वा) प्रयोक्तुं शक्यते।
- इतरत्र 'मा' इत्यस्य प्रयोगः दोषाय भवति।

| अशुद्धानि | शुद्धानि |
|---|---|
| भवान् मा तिष्ठति। | भवान् न तिष्ठति। |
| माता गृहे मा अस्ति। | माता गृहे न अस्ति। |
| छात्राः मा पठन्ति। | छात्राः न पठन्ति। |
| अहं मा करिष्यामि। | अहं न करिष्यामि। |

* **इति**

i. 'अहं मूर्खः' इति सः भावयति। -- इतिशब्दः प्रयुक्तः।
अतः, ततः पूर्वं स्थितस्य शब्दस्य प्रथमा।



ii. सः मां मूर्खं भावयति । - 'इति' शब्दस्य प्रयोगः नास्ति ।
अतः द्वितीया ।

X iii. सः माम् मूर्खम् इति मन्यते । - अत्र 'इति' इति प्रयुक्तम् । द्वितीया अपि प्रयुक्ता । अतः एतत् वाक्यम् अशुद्धम् ।

* **इत्यादयः**

i. इत्यादिशब्दः विशेषणम् । विशेष्यानुगुणं तस्य लिङ्गम् ।

उदा - i. रामः, कृष्णः, हरिः इत्यादयः बालकाः आगताः । (पुं)
ii. लता, सीता, माला इत्यादयः बालिकाः आगताः । (स्त्री)
iii. फलं, पुष्पं, पत्रम् इत्यादीनि वस्तूनि आनीतानि । (नपुं)

ii. अर्थौचित्यदृष्ट्या इत्यादिशब्दः प्रायः बहुवचनेन एव प्रयुज्यते । उदाहरणार्थं पूर्वनिर्दिष्टानि वाक्यानि पश्यन्तु ।

iii. 'इत्यादि'शब्दात् पूर्वं ये शब्दाः भवन्ति तेषां प्रथमाविभक्तिः एव । क्रियापदसम्बन्धार्थम् अपेक्षिता विभक्तिः तु 'इत्यादि'शब्दस्य भवति ।

अतः 'इत्यादि'शब्दोत्तरं स्थितया विभक्त्या यः अर्थः सूच्यते स च अर्थः 'इत्यादि'शब्दात् पूर्वं प्रथमाविभक्त्या निर्दिष्टैः शब्दैः सह अपि सम्बन्धं प्राप्नोति ।

उदा - i. रामः, कृष्णः, भीमः इत्यादीन् आह्वयतु । - (द्वितीया)
(रामं, कृष्णं, भीमम्, अन्यान् च आह्वयतु इत्यर्थः ।)

ii. रामः, कृष्णः, भीमः इत्यादिभिः कृतम् । - (तृतीया)
(रामेण, कृष्णेन, भीमेन, अन्यैः च कृतम् इत्यर्थः ।)

iii. रामः, कृष्णः, भीमः इत्यादिभ्यः ददातु । - (चतुर्थी)
(रामाय, कृष्णाय, भीमाय, अन्येभ्यः च ददातु इत्यर्थः ।)

iv. रामः, कृष्णः, भीमः इत्यादिभ्यः धनं स्वीकरोतु । - (पञ्चमी)
(रामात्, कृष्णात्, भीमात्, अन्येभ्यः च धनं स्वीकरोतु इति अर्थः ।)

v. रामः, कृष्णः, भीमः इत्यादीनां पुस्तकानि एतानि । - (षष्ठी)
(रामस्य, कृष्णस्य, भीमस्य, अन्येषां च पुस्तकानि एतानि इत्यर्थः ।)

vi. रामः, कृष्णः, भीमः इत्यादिषु मम प्रीतिः । - (सप्तमी)
(रामे, कृष्णे, भीमे, अन्येषु च मम प्रीतिः इत्यर्थः ।)

| शुद्धम् | अशुद्धम् |
|---|---|
| ● लता, माला, प्रेमा इत्यादीः आह्वयतु । | ● लतां, मालां, प्रेमाम् इत्यादीः आह्वयतु । |
| ● सः, एषः, सा इत्यादिभिः कृतम् । | ● तेन, एतेन, तया इत्यादिभिः कृतम् । |
| ● श्रीशः, माला, दिव्या इत्यादिभ्यः ददातु । | ● श्रीशाय, मालायै, दिव्यायै इत्यादिभ्यः ददातु । |
| ● अरुणः, नलिनी, चन्द्रिका इत्यादिभ्यः सः सङ्गृहीतवान् । | ● अरुणात्, नलिनीतः, चन्द्रिकातः इत्यादिभ्यः सः सङ्गृहीतवान् । |
| ● वृक्षः, लता, सस्यम् इत्यादीनां छेदनं मास्तु । | ● वृक्षस्य, लतायाः, सस्यस्य इत्यादीनां छेदनं मास्तु । |
| ● कोषः, स्यूतः, कपाटिका इत्यादिषु पश्यतु । | ● कोषे, स्यूते, कपाटिकायाम् इत्यादिषु पश्यतु । |

**अभ्यासः - ४१**

यत्र शक्यते तत्र 'मा' इत्यस्य, इतरत्र 'न' इत्यस्य च प्रयोगं कृत्वा अधस्तनवाक्यानि निषेधार्थकानि अभावार्थकानि वा कुर्वन्तु ।

उदा - i. भवान् एवं मा वदतु ।
ii. मम गृहे द्विचक्रिका न अस्ति ।

१. अहम् अद्य किमपि --------------- पठितवान् एव ।

२. भवान् ह्यः किमर्थं कार्यक्रमार्थं ------------------- आगतवान् ?

३. अग्रे अपायः अस्ति । अतः इतोऽपि अग्रे --------------- गच्छतु ।

४. भवत्सु केनाऽपि सम्भाषणं ---------------------- करणीयम् ।

५. एतानि वस्तूनि मह्यं --------------------------------- सन्तु ।

६. विना कारणं कमपि ------------------------------ ताडयतु ।

७. अम्ब, भवती तदा तदा मां ----------------------- आह्वयतु ।

८. जलं विना सस्यानि ------------------------------ वर्धन्ते ।

९. एतत् युतकं मलिनम् अस्ति । एतत् ---------------- धरतु ।

१०. तत् पात्रं ------------------------------- स्पृशतु भवान् ।

**अभ्यासः - ४२**

उदाहरणानुगुणं समस्तपदानि लिखन्तु ।

उदा - i. न + गत्वा = अगत्वा ii. न + आगत्य = अनागत्य

१. न + सूचयित्वा = ---------------- २. न + स्वीकृत्य = -------------

३. न + स्पृष्ट्वा = -------------------- ४. न + अभ्यस्य = --------------

५. न + विश्वस्य = ------------------ ६. न + विचार्य = --------------

७. न + चिन्तयित्वा = -------------- ८. न + विचिन्त्य = -------------

९. न + समर्प्य = ------------------ १०. न + उत्थाप्य = ------------

११. न + शृण्वन् = ---------------- १२. न + वदन्तः = -------------

१३. न + गच्छन् = ---------------- १४. न + आगच्छन् = -----------

१५. न + प्राप्नुवती = --------------- १६. न + शृण्वती = -------------

१७. न + खादन्ती = ---------------- १८. न + आगतः = -------------

१९. न + उक्तः = ------------------ २०. न + बोधितः = ------------

**अभ्यासः - ४३**

अधोनिर्दिष्टेषु वाक्येषु स्थितानि रिक्तस्थलानि 'अपठित्वा' इत्यादिभिः रूपैः पूरयन्तु। साहाय्यार्थं क्त्वान्तादिरूपाणि आवरणे निर्दिष्टानि सन्ति।

उदा - असूचयित्वा भवता न गन्तव्यम्। (न + सूचयित्वा)

१. सः कार्यम् ------------------------------ वेतनं प्राप्तवान्। (न + कृत्वा)

२. ग्राहकः वस्तु स्वीकृत्य धनम् -------------------- गतवान्। (न + दत्त्वा)

३. सः स्यूतम् --------------------------- आपणं गतवान्। (न + स्वीकृत्य)

४. कार्यम् ------------------- सः बहून् सन्देहान् प्रकटयति। (न + आरभ्य)

५. वत्स ! पादौ --------- भोजनार्थम् आगतवान् वा भवान् ? (न + प्रक्षाल्य)

६. युतकम् -------------------------- सः गृहात् प्रस्थितवान्। (न + धृत्वा)

७. अर्थम् ------------------------------ एव सः पाठं पठति। (न + जानन्)

८. स्वयम् ------------------------ केनापि न उपदेष्टव्यम्। (न + आचरता)

९. पाठम् ----------------------------- सा इतः निर्गतवती। (न + इच्छन्ती)

१०. वैद्यः धनम् ----------------------- चिकित्सां करोति। (न + स्वीकुर्वन्)

११. स्वभावम् --------------------- कस्यापि स्नेहं मा करोतु। (न + परीक्ष्य)

१२. भवान् गृहम् आगत्य भोजनम् --------------- गच्छति वा ? (न + कृत्वा)

१३. माम् ---------------------------------- ते सर्वे गतवन्तः। (न + उक्त्वा)

१४. दीपम् ---------------------- किमर्थम् उपविष्टं भवत्या ? (न + प्रज्वाल्य)

१५. मया अपि ------------------- विषयः भवता कथं ज्ञातः ? (न + ज्ञातः)

**अभ्यासः - ४४**

'कः' इति पदं, 'कीदृशः' इति पदं वा उपयुज्य उदाहरणानुसारं वाक्यानि लिखन्तु।

उदा - तम् अहं न जानामि। - 'सः कः' इति अहं न जानामि।

१. मां भवान् जानाति वा ? ------------------------------------------।

२. पाठम् अहं न जानामि। ------------------------------------------।

३. ताम् अहं कथं जानामि ? ------------------------------------------ ?

४. भवतः सहोदरम् अहं जानामि। ------------------------------------------।

५. तस्य आशयं कः जानाति ? ------------------------------------------ ?

६. तां सः द्रष्टुम् इच्छति। ------------------------------------------।

७. तां घटनाम् अहं न स्मरामि। ------------------------------------------।

८. फलितांशं ज्ञातवान् वा भवान् ? ------------------------------------------।

९. तं प्रदेशं कृष्णः जानाति। ------------------------------------------।

१०. तां महिलां भवान् जानाति खलु ? ------------------------------------------ ?

**अभ्यासः - ४५**

'इति' शब्दसम्बद्धं पदद्वयं द्वितीयाविभक्तौ परिवर्त्य वाक्यानि पुनर्लिखन्तु।

उदा - सः सामान्यः इति मा चिन्तयतु। तं सामान्यं मा चिन्तयतु।

१. भगिनी अविवेकिनी इति मन्यते सः। ------------------------------------------।

२. कृषिः जीवनाधारः इति मन्यते कृषिकः। ------------------------------------------।

३. सः चोरः इति मत्वा गृहीतवान् आरक्षकः। ------------------------------------------।

४. स्वस्य प्रतिभा अपूर्वा इति मन्यते नटः। ------------------------------।

५. वेषं दृष्ट्वा सः धनिकः इति चिन्तितवान् अहम्। ---------------------------।

६. भवती आत्मीया इति मत्त्वा खलु वदामि ? ------------------------------ ?

७. पुत्रः सुन्दरः इति मन्यते काकः। ------------------------------------------।

८. छाया पिशाची इति मत्वा बालकः भीतः। ---------------------------------।

९. कार्यक्रमः अपूर्वः इति उक्तवन्तः जनाः। -----------------------------------।

१०. भूमिः शय्या इति भावयेत् कार्यकर्ता। ------------------------------------।

**अभ्यासः - ४६**

अधोरेखाङ्कितान् शब्दान् प्रथमाविभक्तौ लिखन्तः 'इति' शब्दम् अपि प्रयुज्य अधस्तनवाक्यानि पुनर्लिखन्तु।

उदा - तं देवं* भावयामि अहम्। 'सः देवः' इति भावयामि अहम्।

१. निर्धनं कीटं मन्यते धनिकः। -------------------------------------------------।

२. रज्जुं सर्पं मत्वा सः दिग्भ्रान्तः। ---------------------------------------------।

३. भवन्तं मदीयं भावितवान् आसम्। ------------------------------------------।

४. श्रीधरं सामान्यं मन्यते भवान् ? --------------------------------------------- ?

५. मां व्याघ्रं भावितवती आसीत् भगिनी। --------------------------------------।

६. भवतीं सहृदयां मत्त्वा सा तथा उक्तवती। ------------------------------------।

७. गुणं दोषं भावयति दुर्जनः। -----------------------------------------------------।

८. जीवनं देवलीलां भावयति विवेकी। --------------------------------------------।

* 'तं देवः इति भावयामि' - इत्यपि प्रयोक्तुं शक्यते। तदा 'इति' शब्दात् देवशब्दमात्रं स्वीकृतम् (परामृष्टम्) इति चिन्तनीयम्। तच्छन्दः देवशब्दः चापि यदा स्वीक्रियते तदा 'सः देवः इति ...' इति प्रयोगः। अत्र तु द्वितीयः क्रमः एव आदृतः।

९. अतिथिं देवं मन्यते गृहस्थः। -----------------------------------------।

१०. भवन्तं वञ्चकं कथयति सः। -----------------------------------------।

११. सेवां धर्मं भावयन्तु भवन्तः। -----------------------------------------।

१२. सिंहं मार्जारं भावयति स्म भरतः। ------------------------------------।

१३. गुरोः कोपम् अनुग्रहं मन्ये। -----------------------------------------।

१४. जननीं देवतां भावयति सः। -----------------------------------------।

१५. दुष्टं पिशाचं भावयतु भवान्। -----------------------------------------।

**अभ्यासः - ४७**

इत्यादिशब्दम् उपयुज्य अधस्तनवाक्यानि पुनर्लिखन्तु।

उदा - कर्तरीं, स्यूतं, तालम्, ---------- सा क्रीतवती।
कर्तरी, स्यूतः, तालः इत्यादीन् सा क्रीतवती।

१. भगवद्गीतां, श्लोकं, पाठं, --------------- छात्रः कण्ठस्थीकृतवान्।
------------------------------------ ,, ,, ।

२. प्रयागं, केदारं, हृशीकेशं ---------------- सः दृष्टवान्।
------------------------------------ ,, ,, ।

३. दिनेशेन, अरविन्देन, चन्द्रेण ---------------- पाठः न पठितः।
------------------------------------------ ,, ,, ।

४. द्रोण्यां, कलशे, घटे, -------------------- सा जलं पूरितवती।
------------------------------------------ ,, ,, ।

५. दुर्बलात्, निर्धनात्, बालात्, ------------ वैद्यः शुल्कं न स्वीकरोति।
------------------------------------------ ,, ,, ।

६. सूर्यस्य, राकेशस्य, गणेशस्य -------------- स्वभावम् अहं न जानामि वा ?

---------------------------------------- ,, ,, ।

७. दुर्बलानाम्, अस्वस्थानां, दीनानां, ------------------ सेवां करोतु।

---------------------------------------------- ,, ,, ।

८. अतिथये, अग्रजाय, अनुजाय, -------------- पानीयं दत्तवती वा भवती ?

------------------------------------------ ,, ,, ।

९. कागदेन, वर्णेन, कूर्चेन, ---------------- विना चित्रलेखनं कथं शक्येत ?

---------------------------------------- ,, ,, ।

१०. अत्रत्यान् जनान्, नदीं, परिसरं, ---------------------- सः बहु इष्टवान्।

------------------------------------------------- ,, ,, ।

# १३. पूरणप्रत्ययान्ताः

प्रणवः - मित्र ! डिसेम्बर्मासे प्रवासार्थं गच्छाम इति अस्ति। भवान् अपि आगच्छति वा ?

अम्बरः - कस्मिन् दिनाङ्के ?

प्रणवः - षड्विंशतितमे दिनाङ्के।

अम्बरः - तस्मिन् दिने मम जन्मदिनाचरणम।

प्रणवः - गतवर्षे एकविशंतितमे दिनाङ्के आसीत् खलु जन्मदिनाचरणम् ?

अम्बरः - आम्। तिथ्यनुगुणं तत् आचर्यते। अतः तथा भवति।

प्रणवः - तर्हि नवदशे दिनाङ्के ? यतः भानुवासरः।

अम्बरः - परीक्षायाः मध्यकालः खलु सः ?

प्रणवः - अहो, विस्मृतम् आसीत् मया। तर्हि द्वादशे दिनाङ्के ?

अम्बरः - परीक्षातः पूर्वं पठनीयं भवति खलु ?

प्रणवः - सत्यं, प्रथमस्थानं प्राप्तव्यं भवता ...।

अम्बरः - स्थानं प्रथमं, द्वितीयं, तृतीयं, दशमं वा ...। मम स्थानप्राप्तौ तात्पर्यं नास्ति। सर्वेऽपि च्छात्राः परीक्षातः पूर्वं पठितुम् इच्छेयुः एव ...।

प्रणवः - तर्हि जनवरीमासस्य प्रथमे सप्ताहे, तन्नाम द्वितीये दिनाङ्के ?

अम्बरः - तच्च दिनं मम अनुकूलाय एव। अन्यान् अपि पृष्ट्वा निश्चिनोतु।

## विशेषः

* **पूरणप्रत्ययान्ताः**

  - प्रथमः, द्वितीयः, तृतीयः इत्यादयः पूरणप्रत्ययान्ताः इति उच्यन्ते। (एकं, द्वे, त्रीणि इत्यादयः तु सङ्ख्याः इति उच्यन्ते।)

* **तमट् (तम) प्रत्ययः**

| १९ ततः पूर्वम् | १९ | १९ अनन्तरम् |
|---|---|---|
| कुत्रापि तमट् (तम) प्रत्ययः न करणीयः। | | सर्वत्र* तमट् (तम) प्रत्ययः करणीयः। |

* **पूरणप्रत्ययान्ताः पुंलिङ्गे -**

| १ - १० | | ११ - १९ | २०, ततः ऊर्ध्वम् ... |
|---|---|---|---|
| १ - प्रथमः | ६ - षष्ठः | एकादशः, द्वादशः | २० - विंशतितमः |
| २ - द्वितीयः | ७ - सप्तमः | ...... नवदशः | २१ - एकविंशतितमः |
| ३ - तृतीयः | ८ - अष्टमः | (विसर्गरहितं रूपं | ३० - त्रिंशत्तमः |
| ४ - चतुर्थः | ९ - नवमः | सङ्ख्या भवति। | ५० - पञ्चाशत्तमः |
| ५ - पञ्चमः | १० - दशमः | विसर्गसहितं रूपं | ७५ - पञ्चसप्ततितमः |
| | | पूरणप्रत्ययान्तं भवति।) | १०० - शततमः, एवम् एव अग्रे अपि। |

* **पूरणप्रत्ययान्ताः नपुंसके -**

| पुं. | न. | |
|---|---|---|
| प्रथमः | प्रथमम् | एवम् एव अग्रे अपि। |
| द्वितीयः | द्वितीयम् | |
| दशमः | दशमम् | |
| विंशतितमः | विंशतितमम् | |

* **पूरणप्रत्ययान्ताः स्त्रीलिङ्गे -**

- प्रथमा, द्वितीया, तृतीया - इति त्रिषु स्थलेषु आकारः।
- इतरत्र सर्वत्र ईकारः एव। यथा - चतुर्थी, पञ्चमी, दशमी, नवदशी, विंशतितमी, शततमी ...

---

* विंशतेः ऊर्ध्वं तमट्प्रत्ययरहितानि रूपाणि अपि कुत्रचित् भवन्ति। तथापि तेषां तमट्प्रत्ययसहितं रूपं तु अस्ति एव। अतः तमट्प्रत्ययान्तस्य रूपस्य स्वीकारे दोषसम्भावना न भवति।

**अभ्यासः - ४८**

आर्यमित्रः कस्याश्चित् संस्थायाः कार्यदर्शी । सः संस्थायाः कार्यस्य विस्तारार्थं मासात्मकं विरामं स्वीकृतवान् अस्ति । तस्य प्रवासयोजना एवम् -

| मासस्य पूर्वार्धे | मासस्य उत्तरार्धे |
|---|---|
| १ - बेङ्गलूरुतः प्रस्थानम् | २० - हुब्बळ्ळिनगरम् |
| २ - तुमकूरुनगरम् | २१ - धारवाडनगरम् |
| ३ - मैसूरुनगरम् | २३ - बेळगावँनगरम् |
| ६ - मडिकेरिनगरम् | २६ - बिजापुरनगरम् |
| ७ - मङ्गलूरुनगरम् | २८ - गुलबर्गानगरम् |
| १० - उडुपिनगरम् | ३० - बीदरनगरम् |

एतदाधारेण आर्यमित्रः कस्मिन् दिनाङ्के कुत्र भविष्यति इति लिखन्तु ।

उदा - १. आर्यमित्रः प्रथमे दिनाङ्के बेङ्गलूरुतः प्रस्थानं करिष्यति ।

२. आर्यमित्रः ------------------------------------ तुमकूरुनगरे भविष्यति ।

३. आर्यमित्रः ------------------------------------------------ भविष्यति ।

४. आर्यमित्रः ------------------------------------------------ भविष्यति ।

५. आर्यमित्रः ------------------------------------------------ भविष्यति ।

६. आर्यमित्रः ------------------------------------------------ भविष्यति ।

७. आर्यमित्रः ------------------------------------------------ भविष्यति ।

८. आर्यमित्रः ------------------------------------------------ भविष्यति ।

९. आर्यमित्रः ------------------------------------------------ भविष्यति ।

१०. आर्यमित्रः ----------------------------------------------- भविष्यति ।

११. आर्यमित्रः ----------------------------------------------- भविष्यति ।

१२. आर्यमित्रः ----------------------------------------------- भविष्यति ।

**अभ्यासः - ४९**

प्रभुदेवमहोदयस्य जीवनस्य उत्तरार्धस्य प्रमुखाः घटनाः -

| | |
|---|---|
| ४० - काव्यलेखनम् | ६३ - सम्मानः |
| ४५ - विदेशप्रवासः | ६६ - पद्मश्रीप्रशस्तिः |
| ५२ - पुत्रस्य विवाहः | ६७ - पुनः विदेशप्रवासः |
| ५५ - विभागप्रमुखः | ६९ - प्राथमिकः हृदयाघातः |
| ५८ - निवृत्तिः | ७४ - पौत्रस्य सम्माननम् |
| ६१ - दौहित्र्याः विवाहः | ७९ - मरणम् |

प्रभुदेवः कतमे वर्षे किं कृतवान्/किं जातम् इति लिखन्तु -

उदा - १. प्रभुदेवः चत्वारिंशत्तमे वर्षे काव्यं लिखितवान्।

२. प्रभुदेवः ---------------------------------------------------- कृतवान्।

३. ---------------------------------- प्रभुदेवस्य ------------------ जातः।

४. प्रभुदेवः ------------------------------------------------------ जातः।

५. प्रभुदेवः ------------------------------------------------------ जातः।

६. ---------------------------------- प्रभुदेवस्य ------------------ जातः।

७. ------------------------------------ प्रभुदेवस्य ---------------- जातः।

८. प्रभुदेवः --------------------------------------------------- प्राप्तवान्।

९. प्रभुदेवः ---------------------------------------------------- कृतवान्।

१०. --------------------------------- प्रभुदेवस्य ----------------- जातः।

११. --------------------------------- प्रभुदेवस्य ------------------ जातः।

१२. प्रभुदेवः --------------------------------------------------- दिवं गतः।

**अभ्यासः - ५०**

भारतीयसम्प्रदाये वर्षस्य एकैकस्याः तिथेः एकैकं वैशिष्ट्यम् । कस्यां तिथौ किं वैशिष्ट्यम् इति अधः सूचितम् अस्ति । रिक्तस्थानानि उचितेन पदेन पूरयन्तु ।

उदा - (१) --------------- तिथौ युगादिपर्व ।
प्रथमायां तिथौ युगादिपर्व ।

१. (३) -------------------------------- तिथौ अक्षयतृतीया ।

२. (४) --------------------------------- तिथौ गणेशचतुर्थी ।

३. (५) ------------------------------------ तिथौ नागपूजा ।

४. (८) -------------------------------- तिथौ श्रीकृष्णपूजा ।

५. (९) --------------------------------- तिथौ श्रीरामपूजा ।

६. (१०) ------------------------------ तिथौ विजयदशमी ।

७. (११) ----------------------------- तिथौ उपवासव्रतम् ।

८. (१३) -------------------------------- तिथौ प्रदोषपूजा ।

९. (१४) ------------------------------- तिथौ अनन्तव्रतम् ।

१०. (१५) ----------------------------------- तिथौ उपाकर्म ।

११. (३०) -------------------------------- तिथौ पितृतर्पणम् ।

**अभ्यासः - ५१**

गणनाथः बालिकाविद्यालये अध्यापकः । सः स्वपुस्तके बालिकानां कासाञ्चित् क्रमसङ्ख्यां तत्सम्बद्धं कार्यं च लिखितवान् । आवरणे निर्दिष्टायाः सङ्ख्यायाः साहाय्येन पूरणप्रत्ययान्तं पदम् (स्त्रीलिङ्गे) उचितां विभक्तिं च चिन्तयित्वा रिक्तस्थानानि पूरयन्तु ।

उदा - (२०) ---------- बालिका श्वः बोधनीया ।
विंशतितमी बालिका श्वः बोधनीया ।

१. (२४) -------------------------- बालिकाम् आहूय लेखनकार्यं वक्तव्यम्।

२. (२८) ---------------------------------- बालिकया स्वच्छता कारणीया।

३. (३१) ------------------------------ बालिकायै कथापुस्तकं दातव्यम्।

४. (३२) --------------------------------- बालिकातः शुल्कं सङ्ग्रहणीयम्।

५. (३७) ------------------------- बालिकायाः टिप्पणीपुस्तकं प्रत्यर्पणीयम्।

६. (४३) ---------------------- बालिकया सह गोष्ठीविषये चर्चा करणीया।

७. (४४) -------------------------------- बालिकायै नायिकात्वं दातव्यम्।

८. (५०) -------------------- बालिका श्वः मुख्याध्यापकसमीपं प्रेषणीया।

९. (१५) ---------------------------- बालिकायाः प्रगतिवर्धनं चिन्तनीयम्।

१०. (३३) -------------------------- बालिका राज्यस्तरीयस्पर्धार्थं प्रेषणीया।

**अभ्यासः - ५२**

'सङ्ख्याहस्तः' इति काचित् क्रीडा। शताधिक-बालक-बालिका-सहिते गणे एषा प्रवृत्ता। काचित् सङ्ख्या वक्तव्या। सङ्ख्यावता हस्तम् उन्नीय अपरा सङ्ख्या वक्तव्या। एषः क्रीडाक्रमः। अधः विवरणम् अस्ति। सङ्ख्यासूचकपदेन पूरणप्रत्ययान्तपदेन वा रिक्तस्थानं यथोचितं पूरयन्तु।

| | |
|---|---|
| उदा - | अध्यापकः दश (१०) इति उक्तवान्।<br>तदा दशमः (१०) हस्तम् उन्नीय पञ्चदश (१५) इति उक्तवान्। |

----------------- (१५) बालकः हस्तम् उन्नीय ----------------- (१९) इति उक्तवान्। तदा --------------- (२१) बालकः हस्तम् उन्नीतवान्। अध्यापकः --------------- (२१) बाह्यं कृतवान्। अनन्तरम् अध्यापकः --------------- (३३) इति उक्तवान्। तदा --------------- (३३) बालिका हस्तम् उन्नीय

-------------- (५) इति उक्तवती । तदा -------------- (५) बालिका हस्तम् उन्नीय -------------- (१८) इति उक्तवती । -------------- (१८) बालकः हस्तम् उन्नीय -------------- (२०) इति उक्तवान् । -------------- (२०) बालिका हस्तम् उन्नीय -------------- (६०) इति उक्तवती । -------------- (६०) तमः बालकः मौनम् उपविष्टवान् आसीत् । -------------- (५९) तं स्मारितवान् । तदा -------------- (६०) झटिति हस्तम् उन्नीय सङ्ख्यां वक्तुं विस्मृतवान् ।

तावता घण्टानादः जातः । क्रीडा समाप्ता ।

# १४. इव, उत

देवनाथः - किं भोः, राजकीयपुरुषः इव विलम्बेन आगच्छन् अस्ति !

प्रभुस्वामी - किं भवान् चातकः इव मम प्रतीक्षां कुर्वन् आसीत् वा ?

दे.ना. - अथ किम् ? गजस्य इव मन्दम् आगमनं भवतः ।

प्र.स्वा. - किं करोमि मित्र ! अहं नगरयानेन आगतवान् । तच्च यानं महिषः इव मन्दं गच्छति स्म ।

दे.ना. - महिषः इव, उत कूर्मः इव ?

प्र.स्वा. - उभयम् अपि सङ्गच्छते । तदस्तु, किं भवान् कृपणः इव सम्भाषणेन एव कालं यापयति, उत खाद्यं, पानीयं च ... ?

दे.ना. - किं रे, उदरम्भरेः इव खाद्यस्य एव चिन्ता भवतः ! अम्ब ! प्रभुस्वामी अपि उपस्थितः अस्ति ... ।

प्र.स्वा. - आं मित्र, मादृशाः केचन उदरम्भरयः इव, भवादृशाः बृहस्पतयः इव । वयं मूर्खाः इव; भवन्तः तु बुद्धिमन्तः इव ... ।

दे.ना. - अये, अलं प्रलपनेन । भवान् आगमनोद्देशं कथयति, उत एवम् एव जल्पन् तिष्ठति ?

प्र.स्वा. - जल्पनम् अहं कृतवान्, उत भवान् ?

माता - जल्पनं सः कृतवान्,उत भवान् इति चर्चा मास्तु इदानीम् । उपाहारः स्वीक्रियताम् ।

## विशेषः

* **इव**

सादृश्य - प्रदर्शनार्थम् 'इव' शब्दस्य प्रयोगः ।

उदाहरणानि - i. सः गजः इव स्थूलः । - (प्रथमा)
ii. माता अन्यबालकं पुत्रम् इव पश्यति । - (द्वितीया)
iii. हरिश्चन्द्रेण इव भवता अपि सत्यं वक्तव्यम् । - (तृतीया)

iv. प्रासादस्य इव एतस्य भवनस्य शोभा अस्ति । - (षष्ठी)
v. रामः प्रासादे इव अरण्ये अपि सन्तोषेण स्थितवान् । - (सप्तमी)

**इवशब्देन ययोः सादृश्यम् उक्तं तयोः उभयोः अपि पदयोःसमाना विभक्तिः अस्ति इत्यंशं परिशीलयन्तु ।**

- **उत**

**एतत् कार्यं भवान् कृतवान्, उत कर्मकरः ?**

**अ)** अत्र 'उत' शब्दात् 'वितर्कः' सूचितः । एषः एव भावः 'भवान् वा, कर्मकरः वा ?' इति क्रमेण अपि सूच्यते । किन्तु 'उत' पदस्य प्रयोगेण तु सौन्दर्यम् अधिकम् ।

उदाहरणानि - i. भवान् तम् आहूतवान्, उत माम् ? - (द्वितीया)

ii. एतत् चित्रं पुत्रेण कृतम्, उत पुत्र्या ? - (तृतीया)

iii. भवती फलम् अग्रजाय दत्तवती, उत अनुजाय ? - (चतुर्थी)

iv. एतत् आपणात् आनीतम्, उत पार्श्वगृहात् ? - (पञ्चमी)

v. एषा लेखनी भवतः, उत तस्य ? - (षष्ठी)

vi. भवान् प्रकोष्ठे स्वपिति, उत बहिः ? - (सप्तमी)

एवं वितर्कः अपि सप्तसु अपि विभक्तिषु सम्भवति ।

आ) 'वितर्कः' क्रियायाः अपि सम्भवति -

उदाहरणानि - i. अये, भवान् पठति, उत जल्पति ? - (वर्तमाने)

ii. एतां घटनां भवान् श्रुतवान्, उत दृष्टवान् ? - (भूतकाले)

iii. श्वः भवान् कार्यालयं गमिष्यति, उत गृहे स्थास्यति ? - (भविष्यत्काले)

iv. इदानीं मया गन्तव्यम्, उत स्थातव्यम् ? - (विध्यर्थे)

**अभ्यासः - ५३**

कर्तारः कः/का इव किं कुर्वन्ति इति उदाहरणानुसारं लिखन्तु।

| क्रिया | ... इव |
|---|---|
| हसति। | उन्मत्तः |
| अटति। | शुनकः |
| दर्पं दर्शयति। | अधिकारी |
| व्यवहरन्ति। | प्रौढाः |
| सम्पादयन्ति। | पुरुषाः |
| विलपति। | दुर्बलः |
| शयनं कृतवन्तः। | अस्वस्थाः |
| सङ्गृह्णाति। | कृपणः |
| लज्जते। | बालिका |
| वेषं धृतवन्तः। | विदेशीयाः |
| पलयितवान्। | चोरः |
| कार्यं कृतवन्तः। | तरुणाः |
| उपविष्टवन्तः। | वृद्धाः |
| गायति | कोकिला |
| पुस्तकानि नयति। | पर्वतारोही |

उदा - १. गोविन्दः उन्मत्तः इव हसति।

२. मकरन्दः ---------------------------------।

३. उदयः ---------------------------------।

४. बालकाः ---------------------------------।

५. महिलाः ---------------------------------।

६. अर्जुनः ---------------------------------।

७. अलसाः ---------------------------------।

८. सः ---------------------------------।

९. एषः ---------------------------------।

१०. भवन्तः ---------------------------------।

११. अतिथिः ---------------------------------।

१२. वृद्धाः ---------------------------------।

१३. तरुणाः ---------------------------------।

१४. बालिका ---------------------------------।

१५. विद्यार्थी ---------------------------------।

**अभ्यासः - ५४**

आवरणे दत्तयोः पदयोः उचितां विभक्तिं संयोज्य तेन रिक्तस्थानामि पूरयन्तु ।

उदा - कुपिता गृहिणी --------- क्षिपति । (पाषाणाः इव पात्राणि)
कुपिता गृहिणी पाषाणान् इव पात्राणि क्षिपति ।

१. विकलाङ्गः ---------------------------- चित्रं लिखति । (हस्तः इव पादः)

२. सज्जनः --------------------------------- पश्यति । (जनन्यः इव भगिन्यः)

३. ------------------------------- कार्यं कर्तुं न शक्यते । (भवान् इव अहम्)

४. -------------------------- अपि किं सारः न रोचते ? (अग्रजः इव भवान्)

५. कार्यक्रमार्थं -------------------------------------- अपि जनाः आगताः ।
(विविध-विस्तरणानि इव ग्रामाः)

६. ---------------------------- जीवनं परोपकारार्थम् अस्ति । (वृक्षः इव एषः)

७. -------------------------- अपि कदाचित् सम्भवति । (कथा इव जीवनम्)

८. आरक्षकाः ------------------------- दण्डितवन्तः । (दुष्टाः इव ग्रामीणाः)

९. रामः ----------------------- एषः ----------------------- मारितवान् ।
(राक्षसाः इव शत्रवः)

१०. विष्णुः --------------------- एषः ------------------------ रक्षितवान् ।
(गजेन्द्रः इव अहम्)

११. ------------------- अपि निरक्षरता अस्ति । (भारतम् इव अमेरिकादेशः)

१२. ----------------------- अपि नीतिश्लोकाः भवन्ति । (सुभाषितसङ्ग्रहः इव काव्यानि)

**अभ्यासः - ५५**

आरम्भे सूचितयोः शब्दयोः आधारेण वितर्कसूचकस्य 'उत' शब्दस्य उपयोगं कृत्वा वाक्यानि लिखन्तु।

| | |
|---|---|
| भवान्/सः | उदा – आपणं प्रति भवान् गच्छति, उत सः ? |
| कथा/श्लोकः | १. अहं ---------- पठामि, ----------- ----------- ? |
| भवान्/अन्यः | २. एषा कथा ----------- ----------- ---------- ? |
| कटः/आसन्दः | ३. भवान् ---------- उपविशति ---------- -------- ? |
| गोपालः/सुरेशः | ४. शालां प्रति भवतः गमनं ---------- सह ---------- -------------- ? |
| गृहम्/वाटिका | ५. भवतः पिता ------------ अस्ति ------------- -------------- ? |
| शक्तिः/युक्तिः | ६. कार्यं ----------- सिध्द्यति --------- -------- ? |
| भवती/अनुजा | ७. एतत् चित्रं ----------- लिखितम् ----------- ? |
| भवती/सा | ८. आम्रफलं ----------- ददामि -------- -------- ? |
| स्मरणम्/सेवनम् | ९. रोगः औषधस्य ---------- अपगच्छति -------- ? |
| सङ्ग्रहः/दानम् | १०. विद्यायाः वृद्धिः ----------- भवति --------- ? |
| पुराणम्/काव्यम् | ११. एषा कथा ------------ अस्ति, ------------ ? |
| सम्पादनम्/त्यागः | १२. जीवने तृप्तिः ------------ भवति ---------- ? |
| चलनचित्रम्/नाटकम् | १३. एषः ------------ अभिनयति ------------- ? |
| वीणा/विद्या | १४. एतत् पुस्तकं भवती ------------ आनीतवती ------------- ? |
| गानम्/रचना | १५. भवतः गीतस्य ----------------- अभिरुचिः ------------- ? |

## १५. वा, तर-तमौ, यत्, शक्नोति-शक्यते . . .

स्वामी - भीम ! सोम ! चेल ! मल्लेश ! सर्वे अत्र शृण्वन्तु । एतस्य वृक्षस्य फलानि सङ्ग्रहणीयानि । भवत्सु अन्यतरेण एतत् करणीयम् । कः कर्तुं शक्नोति ?

भीमः - अहं तु न शक्नोमि । सोमः मल्लेशः वा शक्नुयात् ।

सोमः - अहम् अपि न शक्नोमि । मल्लेशः अपि न शक्नोति । चेल-भीमयोः अन्यतरः एव शक्नुयात् ।

चेलः - अहम् अपि न शक्नोमि । सोमः, भीमः, मल्लेशः वा न शक्नोति इति तु ज्ञातम् । अतः श्रीमन् ! वयं न शक्नुमः ।

स्वामी - न शक्नुवन्ति भवन्तः ? अहं चिन्तितवान् आसं यत् भवत्सु अन्यतमेन एतत् शक्यते इति ।

भीमः - मम गृहस्य पार्श्वे भद्रः अस्ति । सः शक्नुयात् । तस्य अनुजः शङ्करः अपि शक्नुयात् । तस्य मातुलः शूरः अपि शक्नुयात् । त्रयः अपि शक्नुयुः ।

स्वामी - तर्हि भीम ! तेषु अन्यतमम् आहूय आगच्छति वा भवान् ?

भीमः - शूरः पार्श्वग्रामं गतवान् । अतः भद्र-शङ्करयोः अन्यतरम् आनयामि !

स्वामी - अस्तु, तौ वदतु यत् अहम् आह्वयामि इति । एतदपि वदतु यत् परिश्रमानुगुणं धनं दीयते इति ।

भीमः - किं धनप्रस्तावेन ? अहं वदामि यत् स्वामिनी मध्याह्नभोजनं ददामि इति उक्तवती इति । तदा तयोः अन्यतरः किम्, उभौ अपि धावन्तौ आगच्छतः ।

### विशेषः

* **वा**

'वा' इत्यस्य विकल्पार्थकत्वम् । (प्रश्नार्थके अपि 'वा' शब्दस्य प्रयोगः अस्ति 'इति' तु अस्माभिः ज्ञातम् एव ।)

उदा - i. रामः, कृष्णः वा करोतु।
ii. आलुकं, बिम्बफलं वा आनयतु।
iii. रामेण कृष्णेन वा अद्य नगरं गम्यते।
iv. रामाय कृष्णाय वा एतत् ददामि।
v. रामात् कृष्णात् वा ऋणं स्वीकरोमि।
vi. रामस्य कृष्णस्य वा लेखनीं स्वीकरोमि।
vii. स्यूते कोषे वा स्यात्, पश्यतु।

* **यत्**

'इति' युक्तेन यत् उच्यते तदेव 'यत्' पदयोगेन अपि वक्तुं शक्यते।




ii. अद्य न शक्यते इति माता वदति।
माता वदति यत् अद्य न शक्यते इति।

* **'तर-तम' प्रत्ययौ**

'तर-तम' प्रत्ययौ अतिशयार्थं द्योतयतः। द्वयोः एकस्य अतिशयः यदा उच्यते तदा 'अन्यतरः' इति प्रयोगः। बहुषु एकस्य स्वीकारे 'अन्यतमः' इति प्रयोगः।

प्रश्नक्रमः -

राम-लक्ष्मणयोः कतरः बुद्धिमान् ? (द्वौ स्तः इत्यतः 'तर' प्रयोगः)
राम-लक्ष्मण-भरतेषु कतमः ज्येष्ठः ? (त्रयः सन्ति इत्यतः 'तम' प्रयोगः)

| शुद्धम् | अशुद्धम् |
|---|---|
| तयोः अन्यतरम् आह्वयतु। | तयोः अन्यतमम् आह्वयतु। |
| तेषु अन्यतमं सूचयतु। | तेषु अन्यतरं सूचयतु। |
| भवतोः अन्यतरेण करणीयम्। | भवतोः अन्यतमेन करणीयम्। |
| भवतीषु अन्यतमया गातव्यम्। | भवतीषु अन्यतरया गातव्यम्। |

* **शक्लृ -धातुः**

| | वर्तमानकाले | | विध्यर्थे (सम्भावनार्थे च) | |
|---|---|---|---|---|
| | ए.व. | ब.व. | ए.व. | ब.व. |
| प्रथमपुरुषे | शक्नोति | शक्नुवन्ति | शक्नुयात् | शक्नुयुः |
| उत्तमपुरुषे | शक्नोमि | शक्नुमः | शक्नुयाम् | शक्नुयाम |
| कर्मणि - शक्यते (ए.व.) शक्यन्ते (ब.व.) | | | | |

**अभ्यासः - ५६**

नरसिंहः शीघ्रनिर्णये असमर्थः। तस्य उत्तरं सदा अपि विकल्पात्मकम् एव भवति। विश्वनाथः तम् उद्दिश्य कांश्चन प्रश्नान् पृष्टवान्। नरसिंहेन यत् उत्तरं दत्तं तत्सम्बद्धं शब्दद्वयं प्रश्नवाक्यस्य पुरतः आवरणे निर्दिष्टम् अस्ति। तदाधारेण प्रश्नानुगुणम् उत्तरं चिन्तयतु।

उदा - विश्वनाथः - आपणं प्रति कं प्रेषयामि ? (गोविन्दः/गणेशः)
नरसिंहः - गोविन्दं गणेशं वा प्रेषयतु।

१. वि.ना. - बालकं केन सह प्रेषयामि ? (मल्लेशः/शरणः)

न.सिं. - बालकं ------------------------------------------------ प्रेषयतु।

२. वि.ना. - एतत् वस्त्रं कस्यै ददामि ? (नलिनी/मालिनी)

न.सिं. - एतत् वस्त्रं ------------------------------------------------।

३. वि.ना. - कस्मात् खनित्रम् आनाययामि ? (श्रीहरिगृहम्/भूपेशगृहम्)

न.सिं. - ------------------------------------------------।

४. वि.ना. - कस्य गृहं गच्छति भवान् ? (नरेन्द्रगृहम्/महीशगृहम्)

न.सिं. - ------------------------------------------------।

५. वि.ना. – धान्यगोणीः कुत्र स्थापयामि ? (धान्यागारम्/प्रकोष्ठः)

न.सिं. – ------------------------------------------------------------ ।

६. वि.ना. – वृक्षारोहणार्थं कम् आह्वयामि ? (भद्रः/शङ्करः)

न.सिं. – ------------------------------------------------------------ ।

७. वि.ना. – मार्जनकार्यं कां वदामि ? (देवी/मल्लिका)

न.सिं. ------------------------------------------------------------ ।

८. वि.ना. – एतत् केन दत्तम् ? (प्रतिवेशी/मित्रम्)

न.सिं. – ------------------------------------------------------------ ।

९. वि.ना. – एतत् लेखनं कस्यै पत्रिकायै भवान् प्रेषयति ?
(मासिकी/साप्ताहिकी)

न.सिं. – ------------------------------------------------------------ ।

१०. भवान् कुत्र शयनं करोति ? (तल्पम्/सोफासनम्)

न.सिं. – ------------------------------------------------------------ ।

**अभ्यासः – ५७**

'यत्' इति पदम् उपयुज्य अधस्तनवाक्यानि पुनः लिखन्तु ।

उदा – ''मया न ज्ञायते'' इति सः उक्तवान् ।
सः उक्तवान् यत् मया न ज्ञायते इति ।

१. ''सः अप्रयोजकः'' इति एषः उक्तवान् ।

------------------------------------------------------------ ।

२. ''किमर्थं तावती चिन्ता ?'' इति पत्नी पृष्टवती ।

------------------------------------------------------------ ।

३. ''तूष्णीं तिष्ठतु रे'' इति पिता तर्जितवान्।

-----------------------------------------------------------------------।

४. ''सत्यं वद'' इति गुरुः शिष्यं बोधितवान्।

-----------------------------------------------------------------------।

५. ''कः कीदृशः ?'' इति केन ज्ञायते ?

-----------------------------------------------------------------------।

६. ''सर्वे तूष्णीं तिष्ठन्तु'' इति अध्यापकः आदिष्टवान्।

-----------------------------------------------------------------------।

७. ''लोको भिन्नरुचिः'' इति पण्डिताः वदन्ति।

-----------------------------------------------------------------------।

८. ''कुत्र गमनम् ?'' इति इदानीं मां मा पृच्छतु।

-----------------------------------------------------------------------।

९. ''धैर्येण व्यवहरतु'' इति पितामहः सदा वदति स्म।

-----------------------------------------------------------------------।

१०. ''न शक्नोमि'' इति कृपया मा वदतु।

-----------------------------------------------------------------------।

अभ्यासः - ५८

| व्यक्तयः | अतिशयिता व्यक्तिः | अतिशयितः गुणः |
| --- | --- | --- |
| १. रामः, कृष्णः | कृष्णः | पटुता |
| २. माला, शीला, कला | कला | साधुत्वम् |
| ३. श्यामः, अमरः, अजितः | श्यामः | बुद्धिमत्ता |
| ४. सुधीरः, प्रकाशः, शरच्चन्द्रः | प्रकाशः | आलस्यम् |
| ५. दिव्या, तृप्तिः, दीपा | दीपा | चातुर्यम् |
| ६. मातुलः, पितृव्यः, पितामहः | पितामहः | प्रियत्वम् |
| ७. पाटलम्, जाती | पाटलम् | सौन्दर्यम् |
| ८. शब्दः, वाक्यं, कथा | कथा | दैर्ध्यम् |
| ९. भूमिः, शिला, शरीरम् | शिला | काठिन्यम् |
| १०. मल्लिका, पारिजातम् | पारिजातम् | कोमलता |
| ११. विन्ध्यः, मलयः, हिमालयः | हिमालयः | महत्त्वम् |
| १२. द्व्यणुकम्, अणुः, परमाणुः | परमाणुः | लघुत्वम् |

उपरि निर्दिष्टस्य कोष्टकस्य साहाय्येन उदाहरणानुसारं 'तर-तम'युक्तानि वाक्यानि लिखन्तु।

उदा - १. रामः लक्ष्मणः - इत्येतयोः कृष्णः पटुतरः।

२. ------------------------------------------------------------------------|

३. ------------------------------------------------------------------------|

४. ------------------------------------------------------------------------|

५. ------------------------------------------------------------------------|

६. ----------------------------------------------------------------------------------------------------------------------------------- ।

७. ----------------------------------------------------------------------------------------------------------------------------------- ।

८. ----------------------------------------------------------------------------------------------------------------------------------- ।

९. ----------------------------------------------------------------------------------------------------------------------------------- ।

१०. ---------------------------------------------------------------------------------------------------------------------------------- ।

११. ---------------------------------------------------------------------------------------------------------------------------------- ।

१२. ---------------------------------------------------------------------------------------------------------------------------------- ।

**अभ्यासः - ५९**

कां क्रियां कर्तुं कः शक्नुयात् इति अधः सूच्यरूपेण निर्दिष्टम् अस्ति । तदाधारेण वाक्यानि रचयन्तु ।

१. कथा - कथ् - सः

२. चित्रम् - लिख् - एषा

३. भारः - उन्नी - अहम्

४. चित्रम् - दृश् - वृद्धा

५. पाकः - कृ - गृहिण्यः

६. देशसेवा - कृ - तरुणाः

७. कार्यं - कृ - वयम्

८. प्रीतिः - प्रदर्श्- सर्वे

९. पाठः - पठ् - बालकाः

१०. गीतम् - गा - वयम्

११. प्रगतिः - साध् - ते

१२. यानं - चाल् - एताः

उदा - १. सः कथां कथयितुं शक्नुयात् ।

२. एषा चित्रं ------------------------------------------------------------------------------------------------------------------ ।

३. अहं भारम् -------------------------------------------------------------------------------------------------------------- ।

४. वृद्धा चित्रं ------------------------------------------------------------------------------------------------------------ ।

५. ----------------------------------------------------------------------------------------------------------------------------------- ।

६. ------------------------------------------------------------------------ ।

७. ------------------------------------------------------------------------ ।

८. ------------------------------------------------------------------------ ।

९. ------------------------------------------------------------------------ ।

१०. ------------------------------------------------------------------------ ।

११. ------------------------------------------------------------------------ ।

१२. ------------------------------------------------------------------------ ।

**अभ्यासः - ६०**

कः/का किं कर्तुं शक्नोति इति '● ' चिह्नेन, किं कर्तुं न शक्नोति इति 'X' चिह्नेन च अधः निर्दिष्टम् अस्ति। तदाधारेण वाक्यानि लिखन्तु।

| | मुखेशः | मीनाक्षी | मुकुन्दः | मन्दारः | अहम् | वयम् |
|---|---|---|---|---|---|---|
| तरणं कर्तुम् | ● | X | X | X | ● | ● |
| यानं चालयितुम् | X | ● | ● | ● | X | X |
| योगासनं कर्तुम् | ● | ● | ● | X | ● | ● |
| चित्रं लेखितुम् | X | ● | ● | ● | X | X |

उदा - मुखेशः तरणं कर्तुं शक्नोति।

२. यानं चालयितुं मीनाक्षी ------------------------------------------------ ।

३. यानं चालयितुं मुखेशः ------------------------------------------------ ।

४. यानं चालयितुं मीनाक्षी मुकुन्दः मन्दारः च ---------------------------- ।

५. तरणं कर्तुं मीनाक्षी मुकुन्दः मन्दारः च ------------------------------- ।

६. योगासनं कर्तुं -------------------------- च ------------------------ ।

७. योगासनं कर्तुम् अहं ------------------------------------------------- ।

८. योगासनं कर्तुं वयं -------------------------------------------------- ।

९. चित्रं लेखितुं -------------------------------- च ---------------------- ।

१०. चित्रं लेखितुम् अहं ------------------------------------------------ ।

११. चित्रं लेखितुं वयं ------------------------------------------------- ।

१२. मन्दारः योगासनं कर्तुं --------------------------------------------- ।

# उत्तराणि

१) १. विमाने कति जनाः आंसन् ?
२. विमानं कुत्र पतितम् ?
३. भवान् कः ?
४. विमाने स्थिताः ते अन्ये कुत्र ?
५. एतत् विमानं कुतः आगच्छत् आसीत् ?
६. अपघातः कदा जातः ?
७. अपघातः किमर्थं जातः ?
८. भवान् अत्र कथम् आगतः ?

२) १. भवान् कुतः आगच्छन् अस्ति ? २. किमर्थं गतवान् ? ३. चित्रमन्दिरस्य नाम किम् ? ४. इदानीं कः समयः ? ५. किमर्थम् एतावन् विलम्बः ? ६. मित्रगृहं कुत्र अस्ति ? ७. चित्रप्रदर्शनं कदा समाप्तम् ? ८. मित्रगृहं कथं गतम् ? ९. कोषे कति रूप्यकाणि सन्ति ?

३) १. कुर्यात् । २. तिष्ठेत् । ३. भवेत् ।
४. प्रत्यागच्छेत् । ५. पीडयेत् ।
६. नयेत् । ७. दद्यात् । ८. प्राप्नुयात् ।
९. न शक्नुयात् । १०. पठेत्, कुर्यात् ।
११. शृणुयात् । १२. पश्येत् ।
१३. तर्जयेत् । १४. प्राप्नुयात् ।
१५. जानीयात् ।

४) १. सम्मिलेयुः । २. आगच्छेयुः ।
३. प्रदर्शयेयुः । ४. वदेयुः ।
५. प्रार्थयेयुः । ६. कुर्युः ।
७. क्षिपेयुः । ८. ताडयेयुः ।
९. प्राप्नुयुः । १०. धावेयुः ।
११. कुर्युः । १२. व्यवहरेयुः ।
१३. मारयेयुः । १४. स्थापयेयुः ।
१५. दण्डयेयुः ।

५) १. कुर्याम् । २. लिखेयम् ।
३. पठेयम् । ४. वदेयम् ।
५. शृणुयाम् । ६. पिबेयम् ।
७. पश्येयम् । ८. स्मरेयम् ।
९. प्रक्षालयेयम् । १०. वादयेयम् ।
११. कुर्याम । १२. गच्छेम ।
१३. तिष्ठेम । १४. पश्येम ।
१५. यापयेम ।

६) १. सकर्मकम् । २. अकर्मकम् ।
३. सकर्मकम् । ४. सकर्मकम् ।
५. अकर्मकम् । ६. अकर्मकम् ।
७. सकर्मकम् । ८. सकर्मकम् ।
९. सकर्मकम् । १०. अकर्मकम् ।
११. अकर्मकम् । १२. सकर्मकम् ।
१३. सकर्मकम् । १४. अकर्मकम् ।
१५. सकर्ममम् । १६. अकर्मकम् ।

७) १. अकर्मकवाक्यम् ।
२. सकर्मकवाक्यम् ।
३. सकर्मकवाक्यम् ।
४. अकर्मकवाक्यम् ।
५. सकर्मकवाक्यम् ।
६. सकर्मकवाक्यम् ।
७. अकर्मकवाक्याम् ।
८. सकर्मकवाक्यम् ।
९. अकर्मकवाक्यम् ।
१०. अकर्मकवाक्यम् ।
११. सकर्मकवाक्यम् ।
१२. अकर्मकवाक्यम् ।
१३. अकर्मकवाक्यम् ।
१४. अकर्मकवाक्यम् ।
१५. सकर्मकवाक्यम् ।

८) १. ए.व., ब.व., ए.व./प्र.पु ।
२. ब.व., ब.व., ब.व./प्र.पु. ।
३. ए.व., ए.व., ए.व./प्र.पु. ।
४. ए.व., ब.व., ए.व./प्र.पु. ।
५. ए.व., ब.व., ए.व./उ.पु. ।
६. ए.व., ब.व., ए.व./प्र.पु. ।
७. ब.व., ब.व., ब.व./प्र.पु. ।
८. ए.व., ब.व., ए.व./प्र.पु. ।

९. ए.व., ब.व., ए.व./प्र.पु. ।
१०. ए.व., ब.व., ए.व./प्र.पु. ।

९) १. उल्लङ्घ्यते । २. वञ्चयते । ३. ऊहते । ४. पलायते । ५. कम्पन्ते । ६. डयन्ते । ७. उत्प्लवन्ते । ८. विस्मयन्ते । ९. प्रकाशन्ते । १०. प्रतीक्षते । ११. अनुवर्तते । १२. शङ्कते । १३. प्रतिष्ठते । १४. लभते । १५. रोचते ।

१०) १. पठन्ति । २. गच्छन्ति । ३. वन्दते। ४. प्रतिष्ठते । ५. उत्तिष्ठति । ६. विक्रीणीते । ७. लिखन्ति । ८. युध्यते । ९. शोभते । १०. उपविशति । ११. सञ्चरति । १२. आशंसन्ते । १३. निन्दति ? १४. प्रयतते । १५. सहते ।

११) १. पठ्यते । २. गम्यते । ३. खाद्यते। ४. नम्यते । ५. सह्यते । ६. लभ्यते । ७. आप्यते । ८. क्रियते । ९. क्षाल्यते । १०. श्रूयते । ११. आलोच्यते । १२. ऊह्यते । १३. आनीयते । १४. गीयते । १५. दीयते । १६. योज्यते । १७. दृश्यते । १८. पीयते । १९. ज्ञायते । २०. पृच्छ्यते ।

१२) १. तेन पाठः पठ्यते । २. एतेन विषयः स्मर्यते । ३. मया कथा ज्ञायते । ४. तया बालकः दृश्यते । ५. एतया स्यूतः दीयते । ६. बालकेन हस्तः क्षाल्यते । ७. गृहिण्या तण्डुलः आनीयते । ८. काकेन आहारः लभ्यते । ९. तया सन्दर्भः ऊह्यते । १०. छात्रेण प्रश्नः पृच्छ्यते ।

१३) १. तैः रामशब्दः उच्यते । २. एताभिः कदली खाद्यते । ३. ताभिः गीतं गीयते । ४. बालिकाभिः प्रश्नः लिख्यते । ५. छात्रैः कथा श्रूयते । ६. जनैः कष्टं सह्यते । ७. पाचकैः पाकः क्रियते । ८. भक्तैः देवः नम्यते । ९. बालकैः जलम् आनीयते । १०. एतैः दुर्गुणः त्यज्यते ।

१४) १. बालकेन चाकलेहाः खाद्यन्ते । २. तया फलानि क्रीयन्ते । ३. यानेन जनाः नीयन्ते । ४. कर्मकरेण सस्यानि आरोप्यन्ते । ५. बालिकया लताः स्पृश्यन्ते । ६. छात्रेण प्रश्नाः पृच्छ्यन्ते । ७. विद्यार्थिन्या पाठाः लिख्यन्ते । ८. दुष्टेन जनाः निन्द्यन्ते । ९. बालकेन पाषाणाः क्षिप्यन्ते । १०. सेवकेन आसन्दाः मार्ज्यन्ते । ११. भक्तैः घण्टाः वाद्यन्ते । १२. महिलाभिः शाटिकाः क्रीयन्ते । १३. भृत्यैः गोण्यः नीयन्ते । १४. पण्डितैः ग्रन्थाः परिशील्यन्ते । १५. सर्वैः बान्धवाः इष्यन्ते ।

१५) २. प्रपितामही दृष्टा । ३. पूगवाटिका दृष्टा । ४. अरण्यं दृष्टम् । ५. निर्झरी दृष्टा । ६. महानदी दृष्टा । ७. पूगवृक्षः दृष्टः । ८. कुटीरः दृष्टः । ९. गृध्रः दृष्टः । १०. केदारः दृष्टः । ११. मयूरनृत्यं दृष्टम् । १२. शृगालः दृष्टः । १३. जलपातः दृष्टः । १४. गुहा दृष्टा । १५. गोष्ठं दृष्टम् ।

१६) २. विचित्रजनाः दृष्टाः । ३. त्रिचक्रिकाः दृष्टाः । ४. चित्रमन्दिराणि दृष्टानि । ५. उन्नतभवनानि दृष्टानि । ६. कार्यालयाः दृष्टाः । ७. वित्तकोषाः दृष्टाः । ८. आपणाः दृष्टाः । ९. चलनचित्राणि दृष्टानि । १०. रम्योद्यानानि दृष्टानि । ११. उद्योगिन्यः दृष्टाः । १२. राजमार्गाः दृष्टाः । १३. उपाहारमन्दिराणि दृष्टानि । १४. मन्त्रिणः दृष्टाः । १५. प्रासादाः दृष्टाः ।

१७) १. पितामहेन देवः पूजितः । २. पितामह्या वर्तिका निर्मिता ।

३. जनन्या पाकः कृतः । ४. अग्रजया रङ्गवल्ली लिखिता । ५. जनकेन भगवद्गीता पठिता । ६. प्रथमानुजया शाकः कर्तितः । ७. द्वितीयानुजया जलम् आनीतम् । ८. पितृव्यया पात्राणि प्रक्षालितानि । ९. ज्येष्ठपितृव्येन सस्यानि आरोपितानि । १०. अग्रजेन धेनुभ्यः तृणानि दत्तानि ।
११. पितृव्यपुत्रेण क्षीरं नीतम् ।
१२. पितृभगिन्या गोष्ठं स्वच्छीकृतम् ।
१३. तृतीयानुजया गृहं मार्जितम् ।
१४. अनुजेन अवकराः क्षिप्ताः ।
१५. कनिष्ठपितृव्येन तृणानि सङ्गृहीतानि ।

१८) १. आपणिकैः वस्तूनि विक्रीतानि ।
२. छात्रैः पाठाः पठिताः ।
३. विद्यार्थिनीभिः श्लोकाः उक्ताः।
४. गायिकाभिः गीतानि गीतानि ।
५. गृहिणीभिः अवकराः क्षिप्ताः ।
६. महिलाभिः शाटिकाः क्रीताः ।
७. भगिनीभिः कम्बलाः प्रसारिताः ।
८. प्राज्ञैः ग्रन्थाः परिशीलिताः ।
९. भक्तैः देवाः नमस्कृताः ।
१०. नागरिकैः नायकाः दृष्टाः ।
११. ग्रामीणैः मार्गाः निर्मिताः ।
१२. तरुणैः सेवाकार्याणि कृतानि ।
१३. नटैः प्रेक्षकाः रञ्जिताः ।
१४. निर्देशकैः नटाः बोधिताः ।
१५. आरक्षकैः प्रदेशाः रक्षिताः ।

१९) १. सीतया पाकः करणीयः ।
२. गजाननेन वृथा समयः न यापनीयः । ३. गङ्गया विद्यालयः गन्तव्यः । ४. भव्यया मातुः आदेशः पालनीयः । ५. ललितया पितुः लेखनी न स्वीकर्तव्या । ६. राकेशेन दिवास्वप्नः न द्रष्टव्यः। ७. बालकेनदन्तधावनं करणीयम् । ८. उद्योगिना कार्यालये आकाशवाणी न श्रोतव्या । ९. एतेन असत्यं न वक्तव्यम् । १०. तया दन्तैः नखः न अपनेतव्यः । ११. छात्रैः प्रार्थना वक्तव्या । १२. बालकैः कोलाहलः न करणीयः । १३. एतैः श्लोकाः कण्ठस्थीकरणीयाः ।
१४. एताभिः सर्वदा दूरदर्शनचित्राणि न द्रष्टव्यानि । १५. बालिकाभिः गृहपाठः लेखनीयः ।

२०) २. भवता भूस्वामिगृहं गन्तव्यम् ।
३. भवता क्षीरम् आनेतव्यम् । ४. तेन कर्मकरः प्रेषणीयः । ५. भवता दशअनिलदीपाः आनेतव्याः ।
६. भवता प्रातः वस्त्रकटाः आनेतव्याः ।
७. सुरेशेन ५०० रूप्यकाणि दातव्यानि ।
८. भवद्भिः अङ्गणं स्वच्छीकरणीयम् ।
९. भवता पाचिका प्रेषणीया ।
१०. भवता सर्वं परिशीलनीयम् ।
११. मया उत्तराणि दातव्यानि ।

२१) २. धूमपानं न करणीयम् । ३. न स्प्रष्टव्यम् । ४. शिरः बहिः न प्रसारणीयम् । ५. अवकरः न क्षेपणीयः ।
६. पुष्पावचयनं न करणीयम् । ७. अत्र वाहनं न स्थगनीयम् । ८. सम्भाषणं न करणीयम् । ९. एतत् न पातव्यम् ।
१०. जन्तुभ्यः आहारः न दातव्यः ।
११. पादपथे सञ्चरणीयम् ।
१२. वेगेन न गन्तव्यम् ।

२२) १. छात्रः अध्यापकं न उपहसेत् ।
२. पुत्री साहाय्यं कुर्यात् । ३. प्रयाणिकः चिटिकां स्वीकुर्यात् । ४. रोगी औषधं पिबेत् । ५. स्कूटर्चालकः शिरस्त्राणं धरेत् ।
६. बालकः ज्येष्ठं नमस्कुर्यात् । ७. वैद्यः उत्कोचं न पृच्छेत् । ८. सा तिलकं धरेत् ।
९. सचिवः लोकसेवां कुर्यात् ।
१०. छात्राः कलहं न कुर्युः । ११. एते साहाय्यम् आचरेयुः । १२. जनाः सदाचारं पालयेयुः । १३. कर्मकराः वृथा समयं न यापयेयुः । १४. प्रेक्षकाः कोलाहलं न कुर्युः । १५. गृहस्थाः सम्प्रदायम् अनुसरेयुः ।

२३) १. छात्रेण प्रश्नः प्रष्टव्यः । २. सेवकेन कार्यं करणीयम् । ३. तेन हस्तः प्रक्षालनीयः । ४. गृहिण्या भिक्षा दातव्या । ५. एतेन स्यूतः स्वीकरणीयः । ६. जनैः उपकारः स्मरणीयः । ७. बालिकाभिः स्वच्छता करणीया । ८. बालकैः कन्दुकः ग्रहीतव्यः । ९. आरक्षकैः समाजः रक्षणीयः । १०. नायकैः देशः अभिवृद्धिपथे नेतव्यः । ११. यानचालकैः नियमाः पालनीयाः । १२. लेखकैः उत्तमग्रन्थाः लेखितव्याः । १३. बालकैः श्लोकाः कण्ठस्थीकरणीयाः । १४. सर्वैः सर्वे समभावेन द्रष्टव्याः । १ जनैः मार्गे अवकराः न क्षेपणीयाः ।

२४) १. भवान् उच्चैः गीतं न गायेत् । २. सः कार्यालयं गच्छेत् । ३. भवान् दूरवाणीं कुर्यात् । ४. भवती घनं दद्यात् । ५. भवान् मां सूचयेत् । ६. जननी पुत्रं न ताडयेत् । ७. मानधनाः दैन्यं न प्रदर्शयेयुः । ८. कार्यशीलाः कष्टं सहेरन् । ९. सेवकाः आदेशं पालयेयुः । १०. अनुपस्थिताः दण्डं दद्युः । ११. सज्जनः जनान् उपदिशेत् । १२. भवन्तः अस्मान् स्मारयेयुः । १३. कृषिकाः सस्यानि वर्धयेयुः । १४. निर्वाहकः चिटिकाः दद्यात् । १५. सर्वे पत्रिकाः पठेयुः ।

२५) १. समर्थेन पाचकेन रुचिकरः पाकः क्रियते । २. वृद्धेन पितामहेन रमणीया कथा उच्यते । ३. दानशीलेन धनिकेन उत्तमं वस्त्रं दीयते । ४. श्रमशीलेन कृषिकेण स्वकीया भूमिः कृष्यते । ५. कुपितया भगिन्या असमीचीना लेखनी क्षिप्यते । ६. धीरेण सैनिकेन शत्रुदेशीयाः सैनिकाः मार्यन्ते । ७. चिन्तामग्नेन तेन, आगता द्विचक्रिका न लक्षिता । ८. भवद्भिः सर्वैः उत्तमा सेवा करणीया । ९. भवतीभिः सर्वाभिः दीर्घः कण्ठहारः केतव्यः । १०. सर्वविधैः जनैः समीचीनः प्रोत्साहः दातव्यः ।

२६) १. बालकेन-महिषी-ताड्यते ।
२. गृहस्थेन-कार्यालयः-गम्यते ।
३. बालिकया-पाठः-पठ्यते ।
४. तेन-मित्रगृहं-गम्यते ।
५. तया-सङ्गीताभ्यासः-क्रियते ।
६. अम्बया-खाद्यं-दत्तम् ।
७. मया-क्षीरं-पीयते ।
८. तेन-उत्साहः-प्रदर्श्यते ।
९. भवत्या-श्लोकाः-कण्ठस्थीक्रियन्ते ?
१०. तेन अन्विष्टम् ।

२७) १. तेन उपविश्यते । तेन उपविष्टम् । तेन उपवेष्टव्यम् ।

२. मल्लिकया विकस्यते । मल्लिकया विकसितम् । मल्लिकया विकसनीयम् ।

३. बालिकया रुद्यते । बालिकया रुदितम् । बालिकया रोदनीयम् ।

४. एतया पत्यते । एतया पतितम् । एतया पतनीयम् ।

५. व्याघ्रेण गर्ज्यते । व्याघ्रेण गर्जितम् । व्याघ्रेण गर्जनीयम् ।

६. बालकैः धाव्यते । बालकैः धावितम् । बालकैः धावनीयम् ।

७. नटैः नृत्यते । नटैः नृत्तम् । नटैः नर्तनीयम् ।

८. जनैः स्नायते । जनैः स्नातम् । जनैः स्नातव्यम् ।

९. मया स्थीयते । मया स्थितम् । मया स्थातव्यम् ।

१०. भवद्भिः अपस्रियते । भवद्भिः अपसृतम् । भवद्भिः अपसरणीयम् ।

२८) १. अग्रजेन प्रस्थितम् । २. चोरैः पलायितम् । ३. सर्वैः सन्तोष्टव्यम् ।

४. बालकेन कुप्यते। ५. तया प्रयत्यते। ६. भवता न पतनीयम्। ७. बालकैः सम्भाष्यते। ८. विमानेन उड्डीयते। ९. भवतीभिः न धावनीयम्। १०. भक्तेन विश्वसितम्। ११. सर्वैः उपविष्टम्। १२. नक्षत्रेण स्फुर्यते। १३. वृक्षैः कम्प्यते। १४. एतैः न विहरणीयम्। १५. वस्त्रेण नश्यते।

२९) १. मम पुत्रेण समाजसेवकेन भवितव्यम्। २. मम पुत्र्या उद्योगिन्या भवितव्यम्। ३. भगिन्या उद्योगिन्या भवितव्यम्। ४. अनुजेन क्रीडानिपुणेन भवितव्यम्। ५. मम पितृव्येण महाप्रबन्धकेन भवितव्यम्।
६. मम पुत्रेण प्रचारकेण भवितव्यम्।
७. मम पुत्रेण दुष्टेन न भवितव्यम्।
८. मम पुत्रेण उद्योगरहितेन न भवितव्यम्। ९. मम पुत्र्या विवाहितया भवितव्यम्। १०. मम पुत्रैः धनिकैः भवितव्यम्। ११. मम पुत्रीभिः धर्मपालिकाभिः भवितव्यम्।
१२. मम पुत्रीभिः पत्यनुकूलाभिः भवितव्यम्। १३. मम पुत्रैः कुलदीपकैः भवितव्यम्। १४. मम बान्धवैः तृप्तैः भवितव्यम्। १५. सर्वैः शान्तैः तृप्तैः च भवितव्यम्।

३०) १. भवद्भिः विचारशीलैः भवितव्यम्। २. सर्वैः उपस्थितैः भवितव्यम्। ३. केनाऽपि अनुपस्थितेन न भवितव्यम्। ४. कयाऽपि अलसया न भवितव्यम्। ५. भवद्भिः सर्वैः उत्तीर्णैः भवितव्यम्। ६. भवता जागरूकेण भवितव्यम्। ७. जनैः सत्यप्रियैः भवितव्यम्।
८. राजकीयपुरुषैः प्रामाणिकैः भवितव्यम्। ९. वणिग्जनैः वञ्चकैः न भवितव्यम्। १०. गृहस्थैः जागरूकैः भवितव्यम्। ११. गृहिणीभिः पतिव्रताभिः भवितव्यम्।
१२. राष्ट्रनायकैः जनप्रियैः भवितव्यम्।
१३. मया समाजसेवकेन भवितव्यम्।
१४. अस्माभिः राष्ट्रभक्तैः भवितव्यम्।
१५. वचनेन प्रियेण हितकरेण च भवितव्यम्। १६. भवद्भिः सर्वैः शीघ्रम् उत्थातव्यम्। १७. स्पर्धाप्रियैः सर्वैः वेगेन धावनीयम्। १८. प्रामाणिकैः छात्रैः पठने विश्वसनीयम्। १९. सर्वाभिः बालिकाभिः अत्रैव स्थातव्यम्।
२०. अस्माभिः सर्वैः १०.०० वादने।

३१) १. न सूचितवान्। (✓) न कृतवान्। (✓) २. न दत्तवती। (✓) न क्षालितवान्। (✓) ३. न आगतवती। (✓) न दृष्टवती। (✓) ४. भवन्तः स्मारितवन्तः। (✓) अहं गतवान्। (✓) ५. न ज्ञातवान्। (✓) सः मौनं स्थितवान्। (✓) ६. दर्पणः भूमौ न पतितः। (✓) भग्नः न जातः। (✓)

३२) १. यदि अहं तम् अद्रक्ष्यम् तर्हि विषयम् असूचयिष्यम्।

२. यदि सः वेगेन अगमिष्यत्, तर्हि अपघातः अभविष्यत्।

३. यदि अपघातः अभविष्यत्, तर्हि दन्ताः अपतिष्यन्।

४. यदि दन्ताः अपतिष्यन्, तर्हि सः वैद्यम् अद्रक्ष्यत्।

५. यदि अहम् अपठिष्यम्, तर्हि प्रथमश्रेणीं प्राप्स्यम्।

६. यदि अहम् अस्मरिष्यम्, तर्हि पत्रम् अलेखिष्यम्।

७. यदि अहम् अद्रक्ष्यम्, तर्हि सः एवं न अकरिष्यत्।

८. यदि सः कुपितः अभविष्यत्, तर्हि भवन्तम् अनिन्दिष्यत्।

९. कार्यं यदि समाप्तम् अभविष्यत् तर्हि निद्राम् अकरिष्यत्।

१०. यदि मम उपरि वृक्षः अपतिष्यत्, तर्हि अहम् अमरिष्यम्।

३३) १. यदि सः दद्यात्, तर्हि अहम् आनयेयम्।

२. यदि अहं ग्रामं गच्छेयं, तर्हि पितामहं पश्येयम्।

३. यदि अम्बा दद्यात् तर्हि अहं खादेयम्।

४. यदि रक्षकः न स्यात्, तर्हि चोरः चौर्यं कुर्यात्।

५. यदि दण्डः दृढः न स्यात्, तर्हि भग्नः भवेत्।

६. यदि सः परिश्रमं कुर्यात्, तर्हि फलं प्राप्नुयात्।

७. यदि सः सम्यक् शृणुयात् तर्हि तात्पर्यं जानीयात्।

८. यदि सः पर्वतं न आरोहेत् तर्हि कीर्तिं न प्राप्नुयात्।

९. यदि ते सम्यक् न क्रीडेयुः, तर्हि जयं न प्राप्नुयुः।

१०. यदि अहं स्यूतं न नयेयम्, तर्हि कष्टम् अनुभवेयम्।

३४) १. यदि निद्रा आगता स्यात् तर्हि सः निद्रां कृतवान् स्यात्।

२. यदि वाक्यं स्फुरितं स्यात्, तर्हि सः उत्तरं लिखितवान् स्यात्।

३. यदि जलं न आगतं स्यात्, तर्हि सा स्नानं न कृतवती स्यात्।

४. यदि आह्वानं न स्यात्, तर्हि वयं न गतवन्तः स्याम।

५. यदि सः मां ताडितवान् स्यात्, तर्हि अहं तं ताडितवान् स्याम्।

६. यदि समयः स्यात् तर्हि अहम् आगतवान् स्याम्।

७. यदि देवः न अनुगृहीतवान् स्यात् तर्हि ते कार्यं न साधितवन्तः स्युः।

८. यदि विद्युत् न गता स्यात्, तर्हि अहं कार्यं समापितवान् स्याम्।

९. यदि पत्नी मातृगृहं न गतवती स्यात्, तर्हि अहम् उपाहारमन्दिरं न गतवान् स्याम्।

१०. यदि सः मां न गृहीतवान् स्यात्, तर्हि अहं पतितवान् स्याम्।

३५) १. एषा अलसा, न वा कठोरभाषिणी। २. सः न चतुरः, न वा क्रियाशीलः। ३. छात्राः न दुर्बलाः, न वा मन्दमतयः। ४. भारतीयाः, न भीरवः, न वा अभिमानशून्याः। ५. पारितोषिकं, न रामाय, न वा सीतायै। ६. क्षीरं न पुत्राय, न वा पुत्र्यै। ७. पुस्तकं न मम, न वा भवतः। ८. सः न गृहे (तिष्ठति), न वा विद्यालये। ९. पुस्तकं न आपणात् (आनीतं), न वा मित्रगृहात्। १०. कार्यं न तेन (कृतं), न वा एतेन।

३६) १. व्याकरणस्य अध्येतारः न केवलं वयम्, अपि तु भवन्तः अपि।

२. प्रवासार्थं न केवलं छात्राः आगच्छन्ति, अपि तु अध्यापकाः अपि।

३. पिता कार्यं न केवलं माम् उक्तवान्, अपि तु भवन्तम् अपि।

४. एषा वार्ता न केवलं भवता उक्ता, अपि तु तेन अपि।

५. देशसेवा न केवलं नायकैः कृता, अपि तु सामान्यैः अपि।

६. एतत् फलं न केवलं भवत्यै, अपि तु तस्मै अपि।

७. सः न केवलं व्याघ्रात् भीतः अपि, तु मार्जारात् अपि ।

८. गृहकार्यस्य दायित्वं न केवलं मातुः, अपि तु पितुः अपि ।

९. तस्य न केवलं गृहे कोपः, अपि तु कार्यालये अपि ।

१०. मात्रा यत् दत्तं तत् न केवलं भवते, अपि तु मह्यम् अपि ।

३७) २. भवान् लूनायानेन न गच्छतु, अपि तु द्विचक्रिकया गच्छतु ।

३. भवान् निद्रां न करोतु, अपि तु पाठं पठतु ।

४. भवती सम्मार्जनं न करोतु, अपि तु रङ्गवल्लीं लिखतु ।

५. भवती व्यर्थं न जल्पतु, अपि तु कार्यं करोतु ।

६. भवान् न धावतु, अपि तु मन्दं गच्छतु ।

७. भवती रोदनं न करोतु, अपि तु धैर्यं वहतु ।

८. भवती कथां न पठतु, अपि तु अनुवादं करोतु ।

९. भवान् इतस्ततः न पश्यतु, अपि तु साक्षात् गच्छतु ।

१०. भवती शयनं न करोतु, अपि तु शिशुं लालयतु ।

११. भवान् क्रीडार्थं न गच्छतु, अपि तु श्लोकं कण्ठस्थीकरोतु ।

३८) २. भवता कार्यं न वक्तव्यम्, अपि तु करणीयम् ।

३. भवता पाठः न पठनीयः, अपि तु लेखनीयः ।

४. भवता क्षीरं न पातव्यम्, अपि तु आनेतव्यम् ।

५. भवता फलं न खादनीयम्, अपि तु कर्तनीयम् ।

६. भवता सः न वक्तव्यः, अपि तु बोधनीयः ।

७. भवता श्लोकः न पठितव्यः, अपि तु कण्ठस्थीकरणीयः ।

८. भवता पाकशाला न क्षालनीया, अपि तु मार्जनीय ।

९. भवता धनं न दातव्यम्, अपि तु सङ्ग्रहणीयम् ।

१०. भवता कटः न प्रसारणीयः अपि तु पुटीकरणीयः ।

११. भवता लेखनी न क्षेपणीया, अपि तु रक्षणीया ।

३९) १. पुस्तकं सीता नीतवती, न तु गीता । २. क्षीरं रमेशः पीतवान्, न तु नागेशः । ३. मातुः साहाय्यम् अहं कृतवान्, न तु भवान् । ४. प्रश्नम् अध्यापकः पृष्टवान्, न तु पिता । ५. फलं मातुलः आनीतवान्, न तु सहोदरः ।

४०) १. सः माम् आहूतवान्, न तु भवन्तम् । २. एषः अयोध्यां दृष्टवान्, न तु मथुराम् । ३. रामः मातरं नमस्कृतवान्, न तु भगिनीम् । ४. नागरिकः राजानं निवेदितवान्, न तु मन्त्रिणम् । ५. अनुजः स्वसारं ताडितवान्, न तु भ्रातरम् । ६. निर्देशकः सेवाव्रतिनः सूचितवान्, न तु कार्यकर्तॄन् । ७. बालकः संन्यासिनं दृष्टवान्, न तु विद्यार्थिनः । ८. कृषिकः धेनूः पालयति, न तु महिषीः । ९. अध्यापकः विद्यार्थिन्यः ताडितवान्, न तु विद्यार्थिनः ।

१०. ग्राहकः अधिकारिणः निन्दितवान्, न तु भ्रातॄन्।

४१) १. न। २. न। ३. मा। ४. न। ५. मा। ६. मा। ७. मा। ८. न। ९. मा। १०. मा।

४२) १. असूचयित्वा। २. अस्वीकृत्य। ३. अस्पृष्ट्वा। ४. अनभ्यस्य। ५. अविश्वस्य। ६. अविचार्य। ७. अचिन्तयित्वा। ८. अविचिन्त्य। ९. असमर्प्य। १०. अनुत्थाप्य। ११. अशृण्वन्।१२. अवदन्तः। १३. अगच्छन्। १४. अनागच्छन्। १५. अप्राप्नुवती। १६. अशृण्वती। १७. अखादन्ती। १८. अनागतः। १९. अनुक्तः। २०. अबोधितः।

४३) १. अकृत्वा। २. अदत्त्वा। ३. अस्वीकृत्य। ४. अनारभ्य। ५. अप्रक्षाल्य। ६. अधृत्वा। ७. अजानन्। ८. अनाचरता। ९. अनिच्छन्ती। १०. अस्वीकुर्वन्। ११. अपरीक्ष्य। १२. अकृत्वा। १३. अनुक्त्वा। १४. अप्रज्वाल्य। १५. अज्ञातः।

४४) १. 'अहं कः' इति। २. 'पाठः कः' इति। ३. 'सा कीदृशी' इति। ४. 'सहोदरः कः' इति। ५. 'आशयः कः' इति। ६. 'सा का' इति। ७. 'सा घटना का' इति। ८. 'फलितांशः कः' इति। ९. 'सः प्रदेशः कः' इति। १०. 'सा महिला का' इति।

४५) १. भगिनीम् अविवेकिनीं मन्यते। २. कृषिं जीवनाधारं मन्यते। ३. तं चोरं मत्वा। ४. प्रतिभाम् अपूर्वां मन्यते। ५. तं धनिकं चिन्तितवान्। ६. भवतीम् आत्मीयां मत्वा। ७. पुत्रं सुन्दरं मन्यते। ७. छात्रां पिशाचीं मत्वा। ९. कार्यक्रमम् अपूर्वम् उक्तवन्तः। १०. भूमिं शय्यां भावयेत्।

४६) १. 'निर्धनः कीटः' इति। २. 'रज्जुः सर्पः' इति। ३. 'भवान् मदीयः' इति। ४. 'श्रीधरः सामान्यः' इति। ५. 'अहं व्याघ्रः' इति। ६. 'भवती सहृदया' इति। ७. 'गुणः दोषः' इति। ८. 'जीवनं देवलीला' इति। ९. 'अतिथिः देवः' इति। १०. 'भवान् वञ्चकः' इति। ११. 'सेवा धर्मः' इति। १२. 'सिंहः मार्जारः' इति। १३. 'कोपः अनुग्रहः' इति। १४. 'जननी देवता' इति। १५. 'दुष्टः पिशाचः' इति।

४७) १. भगवद्गीता, श्लोकः, पाठः इत्यादीन्। २. प्रयागः, केदारः, हृशीकेशः, इत्यादीन्। ३. दिनेशः, अरविन्दः, चन्द्रः इत्यादिभिः। ४. द्रोणी, कलशः, घटः इत्यादिषु। ५. दुर्बलः, निर्धनः, बालः इत्यादिभ्यः। ६. सूर्यः, राकेशः, गणेशः इत्यादीनाम्। ७. दुर्बलाः, अस्वस्थाः, दीनाः इत्यादीनाम्। ८. अतिथिः, अग्रजः, अनुजः इत्यादिभ्यः। ९. कागदं, वर्णः, कूर्चः इत्यादिभिः। १०. अत्रत्याः जनाः, नद्यः, परिसरः इत्यादीन्।

४८) २. द्वितीये दिनाङ्के। ३. तृतीये दिनाङ्के मैसूरुनगरे। ४. षष्ठे दिनाङ्के मडिकेरिनगरे। ५. सप्तमे दिनाङ्के मङ्गलूरुनगरे। ६. दशमे दिनाङ्के उडुपिनगरे। ७. विंशतितमे दिनाङ्के हुब्बळ्ळिनगरे। ८. एकविंशतितमे दिनाङ्के धारवाडनगरे। ९. त्रयोविंशतितमे दिनाङ्के बेळगॉव्नगरे। १०. षड्विंशतितमे दिनाङ्के बिजापुरनगरे। ११. अष्टाविंशतितमे दिनाङ्के गुलबर्गानगरे। १२. त्रिंशत्तमे दिनाङ्के बीदरनगरे।

४९) २. पञ्चचत्वारिंशत्तमे वर्षे विदेशप्रवासम्। ३. द्विपञ्चाशत्तमे वर्षे। ४. पञ्चपञ्चाशत्तमे वर्षे। ५. अष्टपञ्चाशत्तमे वर्षे निवृत्तः। ६. एकषष्टितमे वर्षे। ७. त्रिषष्टितमे वर्षे। ८. षड्षष्टितमे वर्षे पद्मश्रीप्रशस्तिम्। ९. सप्तषष्टितमे वर्षे पुनः विदेशप्रवासम्। १०. नवषष्टितमे वर्षे। ११. चतुस्सप्ततितमे वर्षे। १२. नवसप्ततितमे वर्षे।

५०) १. तृतीयायाम्। २. चतुर्थ्याम्। ३. पञ्चम्याम्। ४. अष्टम्याम्। ५. नवम्याम्। ६. दशम्याम्। ७. एकादश्याम्। ८. त्रयोदश्याम्। ९. चतुर्दश्याम्। १०. पञ्चदश्याम्। ११. त्रिंशत्तम्याम्।

५१) १. पञ्चविंशतितमीं बालिकाम्। २. अष्टाविंशतितम्या बालिकया। ३. एकत्रिंशत्तम्यै बालिकायै। ४. द्वात्रिंशत्तम्याः बालिकातः। ५. सप्तत्रिंशत्तम्याः बालिकायाः। ६. त्रिचत्वारिंशत्तम्या बालिकया सह। ७. चतुश्चत्वारिंशत्तम्यै बालिकायै। ८. पञ्चाशत्तमी बालिका। ९. पञ्चदश्याः बालिकायाः। १०. त्रयस्त्रिंशत्तमी बालिका।

५२) पञ्चदशः बालकः, नवदश, एकविंशतितमः, एकविंशतितमम्, त्रयस्त्रिंशत्, त्रयस्त्रिंशत्तमी बालिका, पञ्च, पञ्चमी, अष्टादश, अष्टादशः, विंशतिः, विंशतितमी, षष्टिः, षष्टितमः, नवपञ्चाशत्तमः, षष्टितमः।

५३) २. शुनकः इव अटति। ३. अधिकारी इव दर्पं दर्शयति। ४. प्रौढाः इव व्यवहरन्ति। ५. पुरुषाः इव सम्पादयन्ति। ६. दुर्बलः इव विलपति। ७. अस्वस्थाः इव शयनं कृतवन्तः। ८. कृपणः इव सङ्गृह्णाति। ९. बालिका इव लज्जते। १०. विदेशीयाः इव वेषं धृतवन्तः। ११. चोरः इव पलायितवान्। १२. तरुणाः इव कार्यं कृतवन्तः। १३. वृद्धाः इव उपविष्टवन्तः। १४. कोकिला इव गायति। १५. पर्वतारोही इव पुस्तकानि नयति।

५४) १. हस्तेन इव पादेन। २. जननीः इव भगिनीः। ३. भवता इव मया। ४. अग्रजाय इव भवते। ५. विविधविस्तरणेभ्यः इव ग्रामेभ्यः। ६. वृक्षस्य इव एतस्य। ७. कथायाम् इव जीवने। ८. दुष्टान् इव ग्रामीणान्। ९. राक्षसान् इव शत्रून्। १०. गजेन्द्रः इव माम्। ११. भारते इव अमेरिकादेशे। १२. सुभाषितसङ्ग्रहे इव काव्येषु।

५५) १. कथाम्, उत श्लोकम्। २. भवतः, उत अन्यस्य। ३. कटे, उत आसन्दे। ४. गोपालेन, उत सुरेशेन। ५. गृहे, उत वाटिकायाम्। ६. शक्त्या, उत युक्त्या। ७. भवत्या, उत अनुजया। ८. भवत्यै, उत तस्यै। ९. स्मरणेन, उत सेवनेन। १०. सङ्ग्रहेण, उत दानेन। ११. पुराणे, उत काव्ये। १२. सम्पादनेन, उत त्यागेन। १३. चलनचित्रे, उत नाटके। १४. वीणातः, उत विद्यातः। १५. गाने, उत रचनायाम्।

५६) १. मल्लेशेन सह, शरणेन सह वा। २. नलिन्यै मालिन्यै वा ददातु। ३. श्रीहरिगृहात् भूपेशगृहात् वा खनित्रम् आनयतु। ४. नरेन्द्रस्य गृहं महेशस्य गृहं वा गच्छामि। ५. धान्यगोणीः धान्यागारे प्रकोष्ठे वा स्थापयतु। ६. वृक्षारोहणार्थं भद्रं शङ्करं वा आह्वयतु। ७. मार्जनाकार्यं देवीं मल्लिकां वा वदतु। ८. एतत् प्रतिवेशिना मित्रेण वा दत्तम्। ९. एतत् लेखनं मासिक्यै साप्ताहिक्यै वा पत्रिकायै प्रेषयामि। १०. अहं तल्पे, सोफासने वा शयनं करोमि।

५७) १. एषः उक्तवान् यत् सः अप्रयोजकः इति । २. पत्नी पृष्टवती यत् किमर्थं तावती चिन्ता इति । ३. पिता तर्जितवान् यत् तूष्णीं तिष्ठतु रे इति । ४. गुरुः शिष्यं बोधितवान् यत् सत्यं वद इति । ५. केन ज्ञायते यत् कः कीदृशः इति । ६. अध्यापकः आदिष्टवान् यत् सर्वे तूष्णीं तिष्ठन्तु इति । ७. पण्डिताः वदन्ति यत् लोको भिन्नरुचिः इति । ८. इदानीं मां मा पृच्छतु यत् कुत्र गमनम् इति । ९. पितामहः सर्वदा वदति स्म यत् धैर्येण व्यवहरतु इति । १०. कृपया मा वदतु यत् न शक्नोमि इति ।

५८) २. एतासु, साधुतमा । ३. श्यामः अमरः अजितः - एतेषु अजितः बुद्धिमत्तमः । ४. सुधीरः, प्रकाशः, शरच्छन्द्रः - एतेषु प्रकाशः अलसतमः । ५. दिव्या, दीप्तिः दीपा - एतासु दीपा चतुरतमा । ६. मातुलः, पितृव्यः, पितामहः - एतेषु पितामहः प्रियतमः । ७. पाटलम् जाती - एतयोः पाटलं सुन्दरतरम् । ८. शब्दः वाक्यं कथा - एतेषु कथा दीर्घतमा । ९. भूमिः, शिला, शरीरम् - एतेषु शिला कठिनतमा । १०. मल्लिका, पारिजातम् - एतयोः पारिजातं कोमलतरम् । ११. विन्ध्यः, मलयः, हिमालयः - एतेषु हिमालयः महत्तमः । १२. द्व्यणुकम्, अणुः, परमाणुः - एतेषु परमाणुः लघुतमः ।

५९) २. लेखितुं शक्नुयात् । ३. उन्नेतुं शक्नुयाम् । ५. द्रष्टुं शक्नुयात् । ६. गृहिण्यः पाकं कर्तुं शक्नुयुः । ६. तरुणाः देशसेवां कर्तुं शक्नुयुः । ७. वयं कार्यं कर्तुं शक्नुयाम । ८ सर्वे प्रीतिं प्रदर्शयितुं शक्नुयुः। ९. बालकाः पाठं पठितुं शक्नुयुः । १०. वयं गीतं गातुं शक्नुयाम । ११. ते प्रगतिं साधयितुं शक्नुयुः । १२. एताः यानं चालयितुं शक्नुयुः ।

६०) २. शक्नोति । ३. न शक्नोति । ४. शक्नुवन्ति । ५. न शक्नुवन्ति । ६. मुखेशः, मीनाक्षी, मुकुन्दः च शक्नुवन्ति । ७. शक्नोमि । ८. शक्नुमः । ९. मीनाक्षी, मुकुन्दः, मन्दारः च शक्नुवन्ति । १०. न शक्नोमि । ११. न शक्नुमः । १२. न शक्नोति ।

* * * * * *

* * *